ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११

# महार्थमञ्जरी

गोरक्षापरपर्याय–श्रीमन्महेश्वरानन्दाचार्यविरचिता
उक्ताचार्यकृतपरिमलाख्यटीकोपेता

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-
श्रीप्रतापसिंहवर-प्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
मुम्बय्यां
तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर

ओं श्रीमन्महार्थप्रकाशवपुषे सत्तत्त्वस्वात्मशिवाय नमः ॥

अथेयम्

# महार्थमञ्जरी



श्रीमन्महेश्वरानन्दनाथविरचिता ।



जयत्या मूलमन्थानमौत्तरं तत्त्वमव्ययम् ।
स्पन्दास्पन्दपरिस्पन्दमकरन्दमहोत्पलम् ॥ १ ॥

स्वप्नसमयोपलब्धा
सा सुमुखी सिद्धयोगिनी देवी ।
गाथाभिः सप्तत्या
स्वोचितभाषाभिरस्तु संप्रीता ॥ २ ॥

वर्धतां दैशिकः श्रीमान्संविन्मार्गश्च वर्धताम् ।
माहेश्वराश्च वर्धन्तां वर्धतां च कुलेश्वरः ॥ ३ ॥

अथ यदेतत् आत्मस्वरूपाविभिन्नपरमेश्वरपरामर्शोपायप्रतिपादने प्रवृत्तम् अभ्युपगमसिद्धा-

पं० १ क० पु० मूलसंस्थानमिति पाठः ।
पं० ४ क० पु० सांमुखीति पाठः ।
पं० ६ क० पु० सुप्रीतेति पाठः ।

न्तस्थित्यात्म सर्वतन्त्रावयवपञ्चात्मकं महार्थमञ्जर्याह्वयं महत् तत्त्वं, तत् तन्त्रामृतसूत्रायमाणगाथाभिः सप्तत्या भवति। तत्र च

१ आद्यायां मङ्गलाचारानुशासनम्।

२ द्वितीयस्यां तन्त्रप्रतिपाद्यमानस्य वस्तुनो निर्देशः।

३-४-५ ततस्तिसृषु स्वात्मतत्त्वप्रमाणानुपयोगप्रपञ्चनम्।

६ षष्ठ्याम् अधिकारिविभागव्यामोहः।

७ सप्तम्यां विधिनिषेधनिर्देशः।

८ अष्टम्यां संसारस्वरूपनिरूपणम्।

९ नवम्यां स्वात्मनः स्फुटस्यापि अस्फुटत्वौचित्यानुशासनम्।

१० दशम्यां विम्रष्टव्यस्वरूपविमर्शस्य पुरुषार्थत्वावस्थापनम्।

११-१२ ततो द्वयोः विमर्शस्वरूपविमर्शः।

१३-२५ ततस्त्रयोदशसु षड्त्रिंशत्तत्त्वविवेकः।

२६ षड्विंश्यामुक्तार्थं प्रति परमार्थपर्यालोचनम् ।

२७ सप्तविंश्यां विश्वस्य प्रकाशविमर्शद्वयान्तर्भावोद्भावनम् ।

२८ अष्टाविंश्याम् एकत्र वस्तुनि शिवशक्तिविभागाध्यवसानम् ।

२९ एकोनत्रिंश्यां परमेश्वरस्य विश्वशरीरतया शक्त्युत्कर्षोपपादनम् ।

३० त्रिंश्यां विश्ववैचित्र्यस्य स्वात्मनि अवैकल्येन अवस्थानप्रदर्शनम् ।

३१ एकत्रिंश्यां प्रमात्रादित्रिकस्य द्वैतपर्यवसायित्वोन्मीलनम् ।

३२-३३ ततो द्वयोः सत्यासत्यविभागव्युदासः ।

३४-३५ ततोऽपि द्वयोः पारमेश्वर्या सपर्यया वैशिष्ट्यावभासनम् ।

३६-४१ ततः षट्सु पूज्यतया श्रीयन्त्रार्थक्रमावमर्शः ।

४२-४६ ततश्च पञ्चसु सपर्यायाः स्वरूपनिष्कर्षः ।

४७-४८ ततोऽपि द्वयोर्देवतास्वभावनिर्णयः ।

४९ एकोनपञ्चाश्यां मन्त्रतन्त्रोद्धारः ।

५० पञ्चाश्यां वाग्वृत्तिविचारः ।

५१ एकपञ्चाश्यां मुद्रातत्त्वोन्मुद्रणम् ।

५२ द्विपञ्चाश्यां विमर्शशक्तेर्भोगापवर्गप्रदत्वोल्लङ्घनम् ।

५३ त्रिपञ्चाश्यां जीवन्मुक्त्युपपत्तिः ।

५४ चतुःपञ्चाश्यां स्वात्मस्वरूपस्य आनन्दस्यन्दितानुवर्णनम् ।

५५-५६-५७ ततस्तिसृषु तत्त्वावबोधनम् ।

५८-६३ ततश्च षट्सु विमर्शानुप्रवेशिता ।

६४-६५ ततो द्वयोर्नैश्चिन्त्यनिर्णयः ।

६६ षट्षष्टितम्यां स्वात्मविमर्शस्य सद्यःसिद्धित्वप्रत्यायनम् ।

६७ सप्तषष्टितम्यां विमर्शलक्षणगुरुकटाक्षाधीनत्वप्रस्थापनम् ।

६८ अष्टषष्टितम्यामुक्तार्थस्य सर्वदर्शनसारत्वप्रतिपादनम् ।

६९ एकोनसप्ततितम्यां तन्त्रवित्तस्य संग्रहणोपन्यासः ।

७० सप्ततितम्यां व्यासादियोगिनाम् अमुत्र श्रद्धैकशरणत्वप्रकाशनम् ।

७१ अन्त्यायां तन्त्रकृतः तन्त्रोपदेशहेतुः प्रयोगः, इति तन्त्रार्थतत्त्वतात्पर्यार्थः ।

---

## अथ ग्रन्थार्थो व्याख्यायते ।

---

श्रीमदनुत्तराद्वैतसिद्धिहेतोः द्वैतप्रयाससतत्त्वप्रत्यूहव्यपोहदक्षो दैशिकेन्द्रभट्टारकः स्वातन्त्र्यमनुसन्दधानः तन्त्रकृत् तन्त्रोपन्यासं प्रति उपोद्घातम् उद्घाटयति

णामि गुणा णिंचसुध
गुरुणो चनेणे महापआसस ।
गन्थे महत्थमञ्जरि
मिमिणं सुरहिं महेसराणन्दः॥१॥

---

नत्वा नित्यविशुद्धौ
गुरोश्चरणौ महाप्रकाशस्य ।
ग्रथ्नाति महार्थमञ्जरी-
मिमां सुरभिं महेश्वरानन्दः ॥१॥

इह खलु सर्वस्यापि जनस्य उपास्यतया काचित् देवता अस्त्येव, इति एतावति तावत् न विप्रतिपत्तिः, केवलं तस्या नामरूपादिव्यपदेशमात्रवैषम्यं यावद्युक्तिपर्यालोचनायां स्वात्मसंवित्स्फुरत्तामात्रस्वभावा इति 'प्रकाश एव विश्वस्य उपास्यदेवता' इति आपतितम् तस्य महत्त्वं 'सा स्फुरत्ता' इत्यादिप्रत्यभिज्ञोक्तनीत्या सर्वसंकल्पोल्लङ्घितया स्फुरत्तैकस्वरूपत्वम् । स च गुरुः—गृणाति प्रकाशयति विश्वव्यवहारमिति गुरुः इति निरुक्त्या सर्वानुग्राहकः, तादृक्प्रकाशव्यतिरेके विश्वस्य अन्धबधिरत्वादिप्रायत्वापत्तेः, स च पर्यन्ततः परशिवभट्टारकापरपर्या-

यत्वात् आत्मरूपो महान्प्रमाता । यदाह शिव-
सूत्रेषु

'गुरुरुपायः' ( २–६ )

इति । तस्य चरणौ ज्ञानक्रियालक्षणं स्वातन्त्र्यं, चर्यते गम्यते प्राप्यते बुद्ध्यते भक्ष्यते च आभ्यां विश्वम् इति हि चरणावित्युच्यते, तौ नत्वा उत्कर्षकस्य आरूढतया विमृश्य, वाङ्मनःकायानां, तदेकविषयीकरणलक्षणप्रह्वीभावो हि नमनं महाप्रकाशत्वं च परमेश्वरस्य महान् उत्कर्षः, तं प्रति तदुपासकस्य प्रह्वीभावश्च इति द्वितयमपि चोक्तम् । अत एव नत्वा इति परमेश्वरप्रणामिकयोत्तरकालं 'महेश्वरानन्द' इत्युक्तम् । स च महेश्वरानन्दो महार्थमञ्जरीं ग्रथ्नाति–ग्रन्थसंदर्भद्वारा लोकम् अनुभावयतीत्यर्थः । मञ्जर्यपि हि पृथक् पुष्पभेदप्रतिभासेऽपि एकाकारेण अनुभूयते, ग्रथनं च पुष्पादेरपि अनायासग्रहणोपायतया प्रसिद्धं, सा च सुरभिः–सर्वा-

भिलषणीयप्रकर्षरूपसौरभ्यरसस्पृहत्वात्, अनेन च विश्वस्य भोगमोक्षदतया अवस्थापनात् वक्ष्यमाणस्य विमर्शोपायस्य औचित्यम् उन्मील्यते॥१॥

अथ तन्त्रप्रतिपाद्यमर्थं तत्परिज्ञानस्य प्रयोजनतया अन्वेष्यतां च अभिदधानः तन्त्रकृत् तत्रैव आवृत्त्या तत्प्रयोजनम् आत्मविमर्शस्वरूपम् अभ्युपेयतया उपपादयति

वड्ढउ महापआसो
विमरिसवित्फुरिबंह्म णिंचलंजोऊ।
संणाविद्योस णिंअमेल-
पअत्ताइ जंथ संथाइ ॥ २ ॥

---

वर्धतां महाप्रकाशो
विमर्शविस्फुरितनिश्चलोद्योतः।
संज्ञाविशेषनिर्णयमात्र-
प्रवृत्तानि यत्र शास्त्राणि ॥ २ ॥

अत्र योऽयं महाप्रकाशस्तत्तत्प्रमातृप्रकाशविशेषाधीनतया प्रकाशमानतायाः स्वभावमात्राद्वा विशेषात् स्वरूपनिष्कर्षे क्रियमाणे, तत्

'तदुपायतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
न हि ज्ञानादृते भावाः केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतायातमेतस्मादवसीयते ॥'

इति श्रीदेविकाक्रमस्थित्या प्रकाशैकस्वभावः षट्त्रिंशत्तत्त्वसपिण्डात्मा प्रत्येकतत्त्वपर्यालोचनेऽपि अनन्तप्रकारो विश्वविलासः, स वर्धताम् उपर्युपरि स्फुरत्ताम् अनुभवतु । अयमेव महान् उपायो विमर्शस्य इति यावत् । ननु शून्यमात्रस्वभावेन मिथ्यात्वमात्रानुप्राणितव्यवहारेण वा विश्ववैचित्र्येण उपायभूतेन अपरमार्थभूतेन परमार्थभूतस्वात्मरूपविमर्शलाभ इत्येतदनालोचितोत्कर्षकाष्ठातत्प्राप्तिरिति माध्यमिकानिर्वचनीयत्वादिवादमर्यादामाशङ्क्याह 'निश्चलोद्योत' इति, स्फुटप्रकाशात्मनि प्रपञ्चोद्योते न कस्यचित् मिथ्या-

त्वोपपादकादेश्चावकाश इत्यर्थः । अस्तु एवं, तथापि अवघातस्वेदादिवत् अन्यथासिद्धसांनिध्येन लोकव्यवहारेण कथम् आत्मविमर्शोत्पत्तिरित्याशंक्याह 'विमर्शविच्छुरित' इति, न खलु स्वसत्तामात्रेण विश्वस्य आत्मविमर्शं प्रति उपायत्वमनेन तथा विमृश्यमानावस्थायामेव, तत्र विश्वस्वरूपस्यैव तन्मिथ्यात्वादेः तद्विपर्यये च विमृष्टव्यतोद्भावनाय निश्चलोद्योत इत्यस्य विमर्शविच्छुरित इत्यनेन सह ऐकपद्यम् । ननु यदि विश्वव्यवहारस्य किंचित् नैयत्यं तदुपपद्येतापि नाम तस्य उपायत्वं, तच्च न संभवति— अद्यापि सिद्धान्तिभिर्द्रव्यगुणादयः षट् इत्यादि पृथक् पृथक् विकल्प्यमानत्वात् ?, इत्याशंक्याह 'संज्ञाविशेषेत्यादि' यत्र हि विश्वविलासात्मनि अर्थे कणभक्षादिशास्त्राणि तत्परिभाषानुगुण्येन संज्ञालक्षणा ये व्यपदेशविशेषास्तन्मात्रोपक्षीणव्यापाराणि, न पुनः प्रत्यक्षादिप्रमाणोपगृह्यमाणपृथिव्यादिपरम्परापरिस्पन्दापलापप्रगल्भानि इति

आद्यो वाक्यार्थः । द्वितीये तु योऽयं महाप्रकाश उक्तलक्षणः, अनवच्छिन्नप्रमाता यद्विमर्शः पुरुषार्थतया अवस्थापयिष्यते, स वर्धतां – मायीयमलोपलेपसंस्कारोच्छेदपर्यन्तमुल्लसतु, सा च वृद्धिः न कैवल्येन, किं तर्हि एवमहं लौकिकः कश्चित् प्रमाता इति प्रत्यभिज्ञानात्मा यो विमर्शः तेन यत् विच्छुरणं विशेषतोऽन्यप्रकाशवैलक्षण्येन लौकिकसंबन्धस्वभावातिक्रान्त्या तादात्म्यपर्यवसायित्वद्योतकोऽप्रश्लेषः तद्वत्तया निश्चलो निर्गतोपाधिकलङ्कः, उद्योतः स्फुरत्ता यस्य, तादृशतया वर्धताम् इत्यर्थः । ननु विम्रष्टव्यस्य आत्मस्वरूपस्य व्यपदेशनैयत्याभावात् तद्विमर्शं प्रति असद्भावपर्यवसायी कश्चित् हृदयंगमीभावः स्यात्?, इत्याशंक्याह – 'संज्ञाविशेषेत्यादि' यत्र परप्रमातृविषये व्यवह्रियमाणानि सर्वाण्यपि शास्त्राणि शिव-विष्णु-ब्रह्म-इत्यादिव्यपदेशमात्रव्यापृतानि, न पुनः स्वस्वभावात्यन्तभेदोपपादनप्रवीणानि भवन्ति । अत्रायमाशयः –

ग्राह्यग्रहणवेलायामिन्द्रियादिप्रणालिकया विश्वप्रतिष्ठाभूमिः 'अकृत्रिमः प्रमाता कश्चित् विम्रष्टा' इति पारम्पर्यात् आपतितम्, तद्द्वारेणैव पारमार्थिकप्रमातृलाभ इह उपदिश्यते ॥ २ ॥

ननु उक्तयुक्त्या विम्रष्टव्यः कश्चित् कर्तृत्वविशेषः कुलालादिवत् न कुत्रचित् अपरोक्ष उपलभ्यते, अनुमेयत्वादौ तु तत्तत्प्रमाणाधीना वस्तुस्थितिरितिस्थित्या तादृक् किञ्चित् प्रमाणं वक्तव्यम्, तदनुक्तौ तु तस्य असत्कल्पत्वापत्तिः?, इत्याशंक्याह

अंणा खु वीसमूलं
तत्थ प्रमाणं ण कोवि अथेई ।
कःस व होइ पिबासा
गंगासुत्ते णिमग्गस्स ॥ ३ ॥

---

आत्मा खलु विश्वमूलं
तत्र प्रमाणं न कोऽपि अर्थयते ।

कस्य वा भवति पिपासा
गंगास्रोतसि निमग्नस्य ॥ ३ ॥

इह आत्मैव प्रकाशस्वभावत्वात् विश्वव्यवहारे निबन्धनं 'मम अवभासते, मया अवलोक्यते' इति प्रमातृप्रकाशोपश्लेषेणैव स्तम्भकुम्भादीनां प्रकाशमानत्वात्, तद्व्यतिरेके च तेषां स्तम्भ एव कुम्भः, कुम्भ एव स्तम्भ इति तयोरन्योन्यं स्वलक्षणापहारोपक्रमेण कस्यचित् विनियन्तृत्वम् इति स्तम्भस्वरूपेण किं भवतु, अस्तम्भो वा इति सन्देहो वा, तस्यापि असंभवो वा इति सर्वथा तूष्णींभाव एव स्वभावः स्यात्, यदि च स्तम्भादिरूपतैव तेषां प्रकाशमानत्वं न पुनः प्रमातृप्रकाशानुग्रहात्मा कश्चित् अतिशयः, तर्हि सर्वेषामपि तथा प्रकाशेरन् न वा कस्यचिदपि इति प्रमातॄणां व्यवहारोच्छेदप्रसंगः। किं च स्तम्भकुम्भाद्यात्मनो विश्वस्य स्वात्मनैव प्रकाशमयताङ्गीकारे सर्वस्यापि प्रमातृवर्गस्य सार्वज्ञ्यम् अत्य-

न्ताज्ञत्वं वा प्रसज्येत नियामकाभावात्, तस्मादात्मनो जगद्व्यवहारप्रयोजनमनिच्छतापि अङ्गीकार्यम्, प्रयोज्यप्रयोजकभावश्च पर्यन्ततोऽनयोस्तादात्म्यमेव पर्यवसायिष्यति, इति – आत्मप्रकाशमयोऽयं विश्वत्र वेद्यवर्गोल्लास इत्यापतितम्। यदुक्तं श्रीप्रत्यभिज्ञायां

'प्रागिवार्थोऽप्रकाशः स्यात्प्रकाशात्मतया विना ।
न च प्रकाशो भिन्नः स्यादात्मार्थस्य प्रकाशता ॥'

इति । खलु अविप्रतिपत्तौ, एवंस्थिते तत्रैव आत्मनि इदमेतादृक् इति वस्तुव्यवस्थापकत्वलक्षणस्वभावविशेषं प्रमाणं प्रति पण्डितस्य पामरस्य वा न कस्यचित् अपेक्षा उत्पद्यते – प्रमातृप्रकाशादिव्यतिरेकात्, प्रत्युत तेनैव व्यवस्थाप्यमानत्वाच्च प्रमाणस्य, प्रमाणं हि नाम अभिनवोदयः स्वभावविशेषः, सोऽपि स्वभावोऽभिनवोदय इत्युक्तत्वात्, नवनवोदयश्च तस्य तत्तद्देशकालोपश्लेषावच्छिद्यमानान्योन्यविलक्षणप्रमेयद्वारोपा-

रूढः कश्चित् विशेषः, न पुनः स्वाभाविको धर्म इति अवधारिताखिलविकल्पविक्षोभक्षुभिताब्धिकल्पम् एकस्वभावमात्मतत्त्वं प्रति प्रत्यक्षस्य व्यापार एव न उपपद्यते इत्यर्थः, न कोऽप्यर्थयते इति आत्मनि प्रमाणमिच्छन् आत्मा स्यात् न वा, यदि अनात्मा जडवर्गः तत्प्रमाणापेक्षैव नोपपद्यते। आत्मैव चेत्? तर्हि स्वस्मिन् स्वयमेव प्रमाणम् अपेक्षते इति आपतेत। उक्तमर्थं तद्दृष्ट्वा प्रतिपादयति 'कस्य वेत्यादि' गाङ्गो हि प्रवाहः शैत्यप्रसादाद्यनेकगुणोत्कर्षात् अन्तर्बहिस्तापापहारे प्रवीणो भवति ॥ ३ ॥

ननु स्तम्भकुम्भादिवत् आत्मनः प्रकाशो न कदाचिदपि स्फुटतया उपलभ्यते, अस्फुटे च अर्थे प्रमाणव्यापारेणैव अवतारितव्यम्?, इत्याशंक्याह

---

पं० ९ ग० पु० तद्दृष्ट्या इति तद्दृष्टान्तेति पाठान्तरोपेतः पाठः।

जं जाणन्ति जना अभि
जनहारीअभि जं विजाणन्ति ।
जंसं चिअ जोक्कारो
सो कःस पुटो न होइ कुलनाहो ॥४॥

---

यं जानन्ति जडा अपि
जलहार्योऽपि यं विजानन्ति ।
यस्यैव नमस्कारः
स कस्य स्फुटो न भवति कुलनाथः
॥ ४ ॥

यं जडा आभीरादयोऽपि जानन्ति, जलहारीप्रभृतयोऽपि अवबुद्ध्यन्ते, सर्वेषामपि 'स्थूलोऽहं, संपन्नोऽहम्' इत्यादेः स्वात्मस्फुरणस्य स्फुटमेव उपलभ्यमानत्वात् । यच्छ्रुतिः

उतैनं गोपा अदृशन्नुतैनमुदहार्यः ।

इति, विमर्शप्राधान्यात् जलहारीज्ञानं प्रति वैशि-

ष्ट्यमुक्तम्। ज्ञानशक्त्येव प्रमातॄणां क्रियाशक्त्याप्ययं क्रोडीक्रियते इत्याह 'यस्यैव नमस्कार' इति, जडजलहार्यादयोऽपि जीववर्गः तत्तत्फलकामनया तत्र तत्र नमस्कुर्वाणो दृश्यते, स सर्वोऽपि नमस्कारो यत्संबन्धेनैव भवति। यच्छ्रुतिः

'यस्मै नमस्तच्छिरः'

इति। सर्वस्यापि स्वात्मैव देवता इति अग्रतो भविष्यति, उक्तरूपश्च परमेश्वरः कुलस्य देहाक्षभुवनादेः विश्वविलासस्य तादात्म्यपर्यवसायितया सृष्ट्यादिभासको भवन् कस्य पदार्थस्य स्फुटो न भवति, यदि कश्चित् उच्येत स एव स्वभावतो न स्यात् इत्यर्थः, तस्मात् सर्वाहंभावस्वभावं परमेश्वरं प्रति अस्फुटत्वशंकायां न कश्चित् अवकाश इति ॥ ४ ॥

एवं सामान्यतः प्रमाणानुपयोगम् आत्मनि उपपाद्य विशेषतोऽपि उपपादयन् आगमे कंचिदनुग्रहं दर्शयति

ओमिणं पच्चंखं
ओमिणं हंमुहं च अणुमाणं ।
आअमदीबालोयोऊ
तस्स पआसेद किं माहंपम्॥९॥

---

अवच्छिन्नं प्रत्यक्षं
अवच्छिन्नं तन्मुखं च अनुमानम् ।
आगमदीपालोकः
तस्य प्रकाशयति किमपि माहात्म्यम्
॥ ९ ॥

ग्राह्यार्थसंनिकर्ष एव प्रत्यक्षस्य प्रामाण्यात् अत्यन्तम् एतत् संकुचितम्, अनुमानं च व्याप्त्युपलम्भसापेक्षत्वात् व्याप्त्युपलम्भस्य च प्रत्यक्षमूलत्वात् अवच्छिन्नमेव, एवं च अवच्छिन्नानां प्रमाणानाम् अनवच्छिन्ने प्रवृत्तिरिति महतीमनौचित्यकक्ष्याम् अवतरति इति प्रागपि

उक्तम् । आगमस्तु यदि आप्तमात्रवाक्यत्वात् प्रामाण्यमर्हति, तर्हि तस्याप्तिः कीदृक्? इति चिन्तायाम्—अन्यस्मात् आप्तात्, तस्यापि अन्यस्मात् इति मूलक्षतिकारिण्यनवस्था, इति अप्रामाण्यमेव माणिक्यपरीक्षावत्, त्रिचतुरकक्ष्याविश्रान्तौ तु सैव संकोचाय कल्पते, यदि पुनर् ‘अनवच्छिन्नप्रकाशात्मकमाहेश्वरविमर्शपरमार्थ’ इति आचार्याभिनवगुप्तोक्तस्थित्या परप्रमातृविमर्शशक्तिमयतया अयम् अङ्गीक्रियते, तदानीम् असौ तस्य स्वभावभूते प्रकाशे दीपोल्लेख इव तमःस्थगितस्तम्भकुम्भादौ अभिव्यञ्जकतया कंचित् चमत्कारम् उपजनयति, तत्र यथा दीपालोके ध्वान्तगर्भवर्तिनां स्तम्भादीनाम् आरोहपरिणाहादिस्वभाव उन्मील्यते, तद्वत् अस्यापि स्वात्मनो यन्माहात्म्यम्—अनवच्छिन्नप्रकाशस्वभावत्वं स्वव्यतिरिक्ताशेषभुवनाक्षाद्यनुप्राणनक्षमत्वं

पं० ७ ख० ग० पु० विमर्श एवागम इति पाठः ।

तत् किमपि अलौकिकं तत्त्वम् आगमेन उन्मील्यते ॥ ५ ॥

ननु प्रमाणपथातिक्रान्तं चेत् इदमात्मतत्त्वं, तत्सर्वोऽपि जनः तद्विमर्शं प्रति अधिकारी, न कश्चित् वा स्यात् – अप्रमितत्वाविशेषात् ?, इत्याशंक्य, नात्र कश्चिदधिकारिविभागक्लेश इत्याह

आणं निरूपणिंजो
वइरिंको कोबि अंपणो भावो ।
अंपविमुहाणं ताणं
अहिहारिविवहबिंबमो होउ ॥ ६ ॥

---

येषां निरूपणीयो
व्यतिरिक्तः कोऽपि आत्मनो भावः ।
आत्मविमुखानां तेषाम्
अधिकारिविभागविभ्रमो भवतु
॥ ६ ॥

येषां पुंसां स्वात्मरूपात् परमेश्वरात् व्यतिरिक्तो ज्योतिष्टोमादिः पदार्थो निरूपणीयो विभावनीयो भवति, तेषाम् अन्यपदार्थौन्मुख्याविनाभूतात् आत्मवैमुख्यादेव हेतोः अयम् अत्र अधिकारी न तु अयम्—इति विभ्रमो विशिष्टो भ्रमः विलासरूपत्वाच्चाप्रामाणिको व्यवहारः संभवतु, 'अतिसर्गे लोट्' ततश्च तेषाम् उपालम्भः क्रियताम् ऊह्यते । तदुक्तमाचार्याभिनवगुप्तपादैः

'आत्मानमनभिज्ञाय विवेक्तुं योऽन्यदिच्छति ।
तेन भौतेन किं वाच्यं प्रश्नेऽस्मिन्को भवानिति ॥'

येषां पुनः स्वात्मन एव भावः स्वातन्त्र्यस्वभावः कश्चित् अतिशयितो धर्मो विमृष्टतया अवतिष्ठते तेषामात्मौन्मुख्यशालिनां न कदाचिदपि अयमधिकारिविभागः ॥ ६ ॥

ननु प्रमाणाधिकारिविभागाद्यनुपयोगेऽपि विधिनिषेधयोरेव वैयर्थ्यं स्यात् विषयाद्यभावात् ? इत्याशंक्य तयोः स्वरूपम् उन्मीलयति

पं० १२ ग० पु० विमृष्टव्यतयेति पाठः ।

जंथ रुई तंथ विही
जंथ ईमा णंथि तंथ अ णियेहो ।
इमयं ह्माणं च्छिवओ
हिअइक्ष्य मात्रि साथाणं ॥ ७॥

---

यत्र रुचिस्तत्र विधि-
र्यत्र च नास्ति तत्र च निषेधः ।
इत्यस्माकं विवेको
हृदयपरिस्पन्दमात्रशास्त्राणाम्॥७॥

यदेतत् अस्ति इति ज्ञानलक्षणो विधिः नास्ति इति ज्ञानस्वभावो निषेधश्चोदनार्थः, तत्र सन्ध्योपासनादौ विधिः कलञ्जभक्षणादौ निषेधश्च इति उच्यते। तत्र इदम् आलोचनीयम्, – अनुष्ठातुः प्रवृत्तिनिवृत्तिप्रयोजनतया विधिनिषेधयोर्व्यापारः, 'अज्ञातज्ञापकत्वे सति अप्रवृत्तप्रवर्तको विधिः' इत्युक्तत्वात् । तत्र किं

तज्ज्ञानमात्रेण प्रवर्तते उत स्वेच्छानुगुण्यात्, यदि ज्ञानमात्रेण सन्ध्यानुपासकः कलञ्जभक्षको वा न कश्चित् आलोकेत, यदि तु स्वेच्छानुगुण्यात् तदनुमातॄणां रुचिमेव विधिनिषेधौ अनुवर्तेते इति अर्थो भवति ततश्च तेषां सन्ध्योपासनादौ यत्र रुचिस्तत्र विधिः यत्र वा कलञ्जभक्षणादौ न रुचिस्तत्र निषेधः इति अनया भङ्ग्या सन्ध्योपासनादावेव अरुचिश्चेत् तत्र निषेधः कलञ्जभक्षणदावेव चेत् रुचिस्तत्र च विधिः, इति अर्थतत्त्वनिश्चयः स्यात् इत्यक्रमेण अस्माकं परमेश्वरविमर्शपर्यायपूर्णाहंभावभूषितानां विवेको विधिनिषेधयोस्तात्पर्यतो निष्कर्षः। एतादृशे च तत्त्वनिश्चये तदेव नः शास्त्रं—यत् सर्वसंवित्संघट्टात्मनः स्वहृदयस्य परितः पृथिव्यादितत्त्वपरंपराक्रोडीकारप्रावीण्येन स्पन्दः परामर्शात्मा चमत्कारः, पारमेश्वरः परा-

पं० ४ ग० पु० तदनुष्ठातॄणां रुचिरेवेति, अनुवर्तते इति पाठः।
पं० १० क० पु० इत्युक्तक्रमेणेति पाठः।

मर्श एव हि आगम इति प्रागपि अवोचाम। तदनुमातॄणाम् इच्छाशक्तिरेव प्रवृत्तिनिवृत्त्यौन्मुख्यात् विधिनिषेध इति व्यपदेशभेदम् अनुभवति इति यावत्। यदुक्तं संवित्प्रकाशे

'त्यागः शक्यक्रियो यस्य स हेय इति निश्चयः।
त्यक्तुं न शक्यते यच्च तदुपादेयमित्यपि॥'

इति। मया च उक्तं संविदुल्लासे

'प्रामाणिकी विधिनिषेधकथा यदि स्यात्
पर्यन्ततः परम एव शिवः प्रमाणम्।
सर्वान्तरः स खलु तत्र विधिं निषेधे
कर्तुं क्षमेत विहिते च विभुर्निषेधम्॥'

इति। श्रीकालिकामतेऽपि

'पतन्ति जन्तवो येन कर्मणा नरके ध्रुवम्।
उत्पतन्ति च तेनैव त्रिकालज्ञा भवन्ति च॥'

इति। एतदाशयेनैव श्रीज्ञानेन्दुकौमुद्याम्

'मनो यत्रैव विश्रान्त्या पूर्णभावमुपाश्नुते।
अतः परं हि किं नाम शुभं क्षेत्रं भविष्यति॥'

पं० २ ग० पु० तदनुष्ठातॄणामिति पाठः।

इति । एतेन

'अप्रबुद्धमतीनां हि एता बालविभीषिकाः ।
मातृमोदकवत्सर्वं प्रवृत्त्यर्थमुदाहृतम् ॥'

इति विज्ञानभैरवांशो व्याख्यातः ॥ ७ ॥

ननु विधिनिषेधाधीना हि लोकयात्रा तयोश्च स्वेच्छामात्रजीवितत्वे तस्यां न किंचित् रूपम् इत्युक्तं स्यात् सैव संसार इत्युच्यते, तदुल्लङ्घने च न पुरुषार्थः, तत्प्रयोजनतया प्रवृत्तं च एतत्तन्त्रं काकदन्तपरीक्षाप्रायताम् उपपद्यते इत्याशंक्याह

पंजालोअणविमुहे
वंथसहावंसअंपणो हिअए ।
संकाविसवेएणे वि
संसारभयेण मुद्यहे लोओ ॥८॥

---

पं० ९ ग० पु० आपद्यते इति पाठः ।

पर्यालोचनविमुखे
वस्तुस्वभावस्यात्मनो हृदये ।
शंङ्कारविषवेगेन इव
संसारभयेन मुह्यते लोकः ॥८॥

योऽयं लोको दृश्यवर्गविलक्षणो द्रष्टृत्वधर्मा तत एव परमेश्वरवत् आत्मनो विश्वशरीरत्वपञ्च-कृत्यकारित्वाद्यैश्वर्ययोगेऽपि पशुत्वाभिमानी मातृवर्गः, स्वस्य यत् हृदयम् इच्छाज्ञानक्रियात्मकशक्तित्रयमेलापरूपम् अन्तस्तत्त्वं तत् परामर्शं प्रति औदासीन्यम् अवलम्बते, अत एव संसारात् जननमरणरूपात् लोकयात्राव्यवहारात् बिभ्यति ।

१ पर्यालोचनमत्रापरिणामिनी चितिशक्तिः, सैव च त्रिगुणातीतशुद्धसत्त्वात्मकबुद्धितत्त्वरूपं हृदयमुच्यते । तथा च योगसूत्रम् । 'प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्' इति । अपरिणामित्वमपवर्गार्थं परिणामिनी तु सैव भोगार्थं प्रकृतिरित्युच्यते इत्यत उक्तं विमुखेत्यादि, तथा च सूत्रम् 'स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः' 'तस्य हेतुरविद्या' इति च । 'तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम्' इति च ।

'द्वितीयात् वै भयं भवति'

इति उपनिषत्प्रक्रियया भेदप्रथोपारूढं चाकित्यम् उद्वहन् मुह्यति, आत्मनः पारमैश्वर्यावस्थामनादृत्य तत्प्रमोषात् अन्तः संक्लिश्यते, यथा सर्पदंशाभावेऽपि विषावेशशंकाशाली स्वस्य मनसि सर्पभ्रमदायिनो रज्ज्वादेः पदार्थस्य वस्तुभूतस्वभावपर्यालोचनानपेक्षायां तात्त्विकसर्पदंशवत् मूर्छामरणादिजनितव्यथाम् उपगच्छते तद्वत्, यदा पुनः स एव लोकः स्वहृदयस्य वास्तवं स्वभावं पर्यालोचयितुम् उन्मुखीभवति[2] तदा न कश्चित्संसारशब्दः सार्थतया उपलभ्यते – स्वविजृम्भात्मतयैव अस्य विमृश्यमानत्वात्। तथा च उक्तम् आचार्याभिनवगुप्तपादैः

'स्वतन्त्रः स्वच्छात्मा स्फुरति सततं चेतसि शिवः
पराशक्तिश्चेयं करणसरणिप्रान्तमुदिता।

---

२ यदा तु पर्यालोचनं संमुखीभवति तदा स्थूलसूक्ष्मपररूपबाह्याभ्यन्तरान्तराः क्रियाज्ञानेच्छार्थाविभासाः स्वात्मैवेति निश्चये सति भयशङ्कैव नास्तीति। तथा चोक्तम्

'आत्मज्ञो न कुतश्चन बिभेति सर्वं हि तस्य निजरूपम्।'

इति।

तदा भोगैकात्म स्फुरति च समस्तं जगदिदं
न जाने कुत्रायं ध्वनिरनुपतेत्संसृतिरिति ॥'

इति ॥ ८ ॥

ननु स्वात्मनो विमर्शमयः कश्चित् विशेषः संसाराद्यशेषक्लेशोपशमनसामार्थ्यशालितया उन्मीलितः, स च तस्य स्फुरण³स्वभावस्य स्फुटीकरणमेव अवधार्यते न च तत्र अस्फुटत्वशंकापि अवतरितुम् अर्हति – अत्यन्तस्फुटतया उपपादितत्वात्, यतः प्रमाणप्रमेयव्यवहारविकल्पस्य अनुपयोगः प्रवितत्य व्याख्यात इत्याशंक्याह

माणिक्कपवेऊ वि
णिऊलिऊं णियमऊहलेहाए ।

३ पररूपान्तराभासे च प्रमाणं यथा
'न च युक्तं स्मृतेर्भेदे स्मर्यमाणस्य भासनम् ।
तेनैक्यं भिन्नकालानां संविदां वेदितैष सः ॥'
इत्यनेन स्मृत्यादौ प्रमातृरूपचेतनघटादिरूपजडरूपार्थावभासोऽस्त्येवेति नियमितम् । यदुक्तमनेनैव
'एवं स्मृतौ विकल्पे वाप्यपोहनपरायणे ।
ज्ञाने वाप्यन्तराभासः स्थित एवेति निश्चितम् ॥'
इति ।

① or it can be felt in "I" ness or nesses in "Thisness". only in अहंता or not in इदंता
(आसन्न) in अहंता / प्रकाश / विमर्श

पडिहाइ लोइआण्णं
अह्यन्तफुडोबि अफुडो अंपा ॥९॥

माणिक्यप्रवेक इव
निचोलितो निजमयूखलेखया ।
प्रतिभाति लौकिकाना-
मत्यन्तस्फुटोऽपि अस्फुट आत्मा
॥ ९ ॥

आत्मरूपो हि परमेश्वरः प्रकाशोत्कर्षत्वात् अशेषभुवनव्यापनक्षमत्वाच्च, विश्वविकल्पकल्पनामयीमर्चिःप्ररोहपरम्पराम् उपर्युपरि उन्मीलयन्

'तत्सृष्ट्वा तदेव अनुप्राविशत्'

इति उपनिषत्प्रक्रियया तथैव च निचोलितः कञ्चुकितप्रायो नित्यम् आस्ते । तत्र लौकिकानां प्रमेयतयालोक्यमाने विश्वस्मिन् व्यवहर्तॄणां प्रमातॄणाम्

'अत्यन्तस्वच्छता यावत्स्वीकृत्यानवभासनम् ।'

इति तन्त्रालोकस्थित्या प्राकट्योद्रेककक्ष्यारूढतया विप्रकृष्टन्योऽपि असौ मध्याह्नमार्तण्डमण्डलन्यायेन तत्तद्रश्मिपरम्परास्फुरणप्राचुर्येण रश्मिवत् गुणसाधर्म्यात् अप्राकट्यावस्थाम् अधितिष्ठति, यथा त्रासादिराहित्यात् अत्यन्तस्वच्छो माणिक्योपलखण्डः स्फुरदुरुमरीचिमञ्जरीपर्यन्ततयैव माणिक्यवत् उत्कृष्टम् इति न अध्यवसितुं शक्यते, तद्वत् आत्मनोऽपि स्वशक्तितिरोहितत्वादेव अस्फुटत्वशंका, एवम् उभयस्वभावतायामेव अस्य विश्वव्यवहारौचित्यम् ॥ ९ ॥

ननु स्फुटत्वमस्फुटत्वं च एतत् अन्योन्यं विरुद्धम्, एतद्धर्मद्वयं कथं नाम संगच्छते इत्याशंक्य तादृशः कश्चिद्विमर्श आम्नायते यद्वत्तया च अस्य परामर्शः पुरुषार्थतया पर्यवस्यति इति उपपादयति

**उद्यो जलई पआसो**
**लोआलोअस्स मङ्गलपडीवो ।**

विमरिसदसामुहाण
तद्दह्य मलालितल्लनिच्छथो ॥१०॥

ऊर्ध्वो ज्वलति प्रकाशो
लोकालोकस्य मङ्गलप्रदीपः ।
विमर्शदशामुखेन
दह्यते मलालितैलनिष्यन्दः ॥१०॥

यो 'ममेदं, जानामि, मम स्फुरति' इति अशेषव्यवहारानुस्यूतः प्रकाशरूपोऽर्थः स खलु लोक्यमानस्य भावराशेरलोक्यमानस्य खपुष्पादेरभावजातस्य च प्रदीपवत् प्रकाशतया अनुभूयते, स तादृक्प्रकाशाभावेन विश्वस्य अन्धतमसत्वापत्तिरिति प्रागपि अवोचाम, अत एव हि असौ मङ्गलतया उपन्यस्तः, इदमेव हि तन्महन्मङ्गलं — यत् स्तम्भकुम्भादीनाम् अन्योन्यस्वभावपरिहा-

पं० १४ ग० घ० पु० स्वभावापहारशङ्कां निःस्वभावत्वमभावानाम् इति पाठः ।

रशंकां निःस्वभावत्वसंभावनां व्यपोह्य तेषां तथाभावत्वेन अवस्थापनम् । स च ऊर्ध्वः – स्वयंप्रकाशतया प्रकाश्यवर्गोत्तीर्णो भवन् ज्वलति संप्रतिपत्त्या स्फुरति, तथा विमर्शाख्य इति यः कश्चित् स्वभावतया स्वीकर्तव्यः, अन्यथा दर्पणादिप्रकाशवत् अस्य जाड्यकक्ष्यानुप्रवेशप्रसंगः। उक्तं च प्रत्यभिज्ञायाम्

'प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ।'

इति । तस्य च विमर्शस्य या दशा – स्फुरत्तावस्था, तस्या मुखेन – औन्मुख्ययोगेन, मलानाम् – आणवकार्ममायीयानाम्, आलिः – पारम्पर्यात्मा संचयः, प्रकाशेन कर्तृभूतेन, दह्यते – स्वात्मानुप्रवेशितया स्वीक्रियते, दीपोऽपि एवमेव ॥ १० ॥

---

४ एतदाशयेनैव विरूपाक्षपञ्चाशिकायां निर्णीतमस्ति

'ज्ञातृज्ञानज्ञेयात्मकमखिलं मद्विमर्शवह्निशिखा ।
दग्ध्वा प्रकाशरूपं शुभ्रं भस्मावशेषयति ॥'

इति ।

संमो हिअयपआसो
भवणस किआअ होइ कंतारो ।
सोचि अ किआविमस्रो
स्वंथा खुहिआ अ विंसविंथारो
॥ ११ ॥

---

सन्नेव हृदयप्रकाशो
भवनक्रियाया भवति कर्ता ।
सैव च क्रियाविमर्शः
स्वस्था क्षुभिता च विश्वविस्तारः
॥ ११ ॥

हृदयप्रकाशो हि सर्वस्य अस्ति इति वक्तव्यः, असत्त्वे स्वव्याघातप्रसंगात् । यथा उपनिषत्

---

५ हृदयप्रकाश इति, तथा चोक्तम्

'सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेशितुः ॥'

इति प्रत्यभिज्ञायाम् ।

5

'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥'

इति । तस्मात् स्वात्मरूपो हृदयप्रकाशः सन्नेव, सन्नित्येतत् प्रकृतितः प्रत्ययतश्च पर्यालोचनीयः, अस्तेर्धातोः शतरि खलु एवमुपपद्यते, तत्र शक्यार्थो भवनाख्यक्रियाप्रत्ययांशस्य कर्ता इति स्वीकार्यः । ततश्च सन्नित्यस्य भवनलक्षणायाः क्रियायाः कर्ता इत्यर्थो भवति, सैव भवनक्रिया कर्तृतामयी विमर्श इत्युच्यते, यदा स्वस्मिन् हृदयप्रकाशस्वरूप एव आत्मनि तिष्ठति[६], तदा विमर्शः शुद्धो विमर्श एव इत्येव व्यवह्रियते,

६ तिष्ठतीति, यदुक्तं तन्त्रालोके

'अन्तःस्थविश्वाभिन्नैकबीजांशविसिसृक्षुता ।
क्षोभोतदिच्छतस्वेच्छाभासनं क्षोभणां विदुः ॥'

इति ।

'ततस्तदान्तरं ज्ञेयं भिन्नकल्पत्वमृच्छति ।
विश्वबीजादतः सर्वं बाह्यं विम्बं विवर्त्स्यति ॥'

इति च ।

पं० ४ ग० पु० प्रकृतेरर्थो भवनेति पाठः ।

यदा तु विकल्पोपश्लेषलक्षणं क्षोभम् अनुभवति, तदा विश्वविस्तारः प्रपञ्चस्फुरणवैचित्र्यात्मा विमर्श इति, तत्र अधिको विशेषणांशः कश्चित् उत्पद्यते। एवं च प्रकाशस्य विमर्शः स्वभाव इत्थं स्वीकार्यः ॥ ११ ॥

ननु विश्वव्यवहारो हि बहिर्ग्राह्यार्थतया कर्तुम् उच्यमानः कथम् आत्मस्वभावो विमर्शः स्यात् इत्याशंक्याह

पुहवीपरमशिवाणं
पश्चाहारे पआसपरमत्थे।
जो अअंणोणविसेसो
सोचिअ हिअंअस्स विमरिसंमेसो
॥ १२ ॥

७ विकल्पोपश्लेपलक्षणं – स एवाहमित्येवं रूपम्, क्षोभम् – इदमित्येवंरूपम्।

८ विशेषणांशः – समनाशिवरूपः।

पृथिवीपरमशिवयोः
प्रत्याहारे प्रकाशपरमार्थे ।
योऽन्योन्यविशेषः
स एव हृदयस्य विमर्शोन्मेषः[९]
॥ १२ ॥

परमशिवात् उपरि न कर्त्रन्तरस्फुरणं, पृथ्व्या उपरि न कार्यान्तरोत्पत्तिश्च, यो मध्यवर्ती तत्त्व-संघातरूपोऽर्थः तस्य प्रत्यक्षादिप्रमाणोपगृह्यमा-णस्य पर्यन्ततः प्रकाश[१०] एव अनुप्राणनतया स्व-भाव इति अन्वयव्यतिरेकाभ्याम् अवधार्यते, ततश्च अन्तः स्वात्मा प्रकाश एव, बहिः प्रकाश्य-प्रपञ्चतया स्फुरति, इत्येतावत् अभ्युपगन्तव्यम्।

---

९ विमर्शोन्मेषः – इदमित्येवंरूपः ।

१० प्रकाश एवेति, पृथिव्यादितत्त्वसंघातो हि प्रकाशरूप एवास्ति न तु विमर्शरूपः इत्यत उक्तं प्रकाश एवेति । अत्र श्लोकद्वयेऽयमाशयः – हृदयं ताम प्रतिष्ठास्थानत्वमुच्यते, तच्च जडानां चेतनं, तस्यापि प्रकाशात्मत्वमित्युक्तं – प्रकाश एवानुप्राणेति, तस्यापि प्रकाशस्य विमर्शशक्तिरित्युक्तं – स च विशेष इति, परमे पदे विश्रान्तस्य विश्वस्य हृदयं विमर्शरूपं मन्त्रात्मकमित्युक्तं द्वितीयसूत्रश्लोके – पृथिवीपरमेति ।

ततश्च षट्त्रिंशतोऽपि तत्त्वानां प्रकाशस्वभावत्वा[११]-विशेषात् पृथिवी आप इत्यादिरन्योन्यविशेषतो व्यवहारो न संभवति, व्यवह्रियते च विशेषः प्रत्यक्षमेव लोकेन, अन्यथा जलस्थलविभागादे-रर्थक्रियाप्रत्यायनानुपपत्तेः, स च विशेषः स्वहृद-यगतया विमर्शयुक्त्यैव उत्पद्यते, उत्पत्तिश्च ता-दात्म्ये पर्यवस्यति यद्यत् अजडं तत् तदेव हि इति उक्तत्वात्। उन्मेषपदेन एतदाह, स्वात्मविमर्श-द्रुमस्य पल्लवपुष्पादिप्रायम्[१२] एतद्विश्ववैचित्र्यस्फुर-णमिति ॥ १२ ॥

---

११ प्रकाशस्वभावत्वादिति। तथा चोक्तं प्रत्यभिज्ञायां

> 'तथा हि जडभूतानां प्रतिष्ठा जीवदाश्रया।
> ज्ञानं क्रिया च भूतानां जीवतां जीवनं परम्॥'

इति। तथा

> 'तदैक्येन विना न स्यात्संविदां लोकपद्धतिः।
> प्रकाशैक्यात्तदेकत्वं मातैकः स इति स्फुटम्॥
> स एव विमृशत्त्वेन नियतेन महेश्वरः।
> विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः॥'

इति।

१२ पुष्पेति, समनारूपेदन्ताविमर्शरूपं पुष्पम्।

अथैनं विमर्शमेव द्रढयितुं षट्त्रिंशत्तत्त्वानाम् अन्योन्यतो विशेषसृष्टिक्रमानुक्रमानुगुण्येन[13] उपपादयन् आदौ शिवतत्त्वम् आलोचयति

तह तह दीसंताणं
संत्ति सहंसाण एक्कसंघट्टो ।
णिअ हिअय-डुमरुवो
हुइ शिवो णाम परमसंत्स्पन्दो
॥ १३ ॥

---

तथा तथा दृश्यमानानां
शक्तिसहस्राणामेकसंघट्टः[14] ।
निजहृदयोद्यमरूपो
भवति शिवो नाम परमस्वच्छन्दः
॥ १३ ॥

---

१३ अनुक्रमानुगुण्येनेति, आवरणक्रमानुकारेण विशेषस्फुटीकारः, इति भावः ।

१४ संघट्टः – तत्तदनुत्तराद्यसंख्यशक्तीनां संघातरूपः ।

तेन प्रकारेण अनुभूयमानानां शक्तिसहस्राणाम् एकसंघट्ट ऐक्यम् अनुभवन्नेव सृष्टिसंहाराद्यन्योन्यविरुद्धक्रियायौगपद्यभूमिर्भवति, यश्च 'उद्यमो भैरवः' (१-५) इति शिवसूत्रस्थित्या स्वहृदयोद्योगस्वभावतया अनुभूयते, यश्च परमस्वच्छन्द इति प्राग्वत्[१५] विश्वोत्तीर्ण एव उच्यते, अन्यस्तु विश्वोत्तीर्णविश्वमयः परमशिवभट्टारकः[१६] पश्चात् प्रकटयिष्यते, एवंविधः शिवो नाम भवति, अयंभावः — उन्मेषनिमेषात्मनां तत्त्वान्तरदुर्लभेन स्वातन्त्र्येण चिदाह्लादलक्षणशक्तिद्वितयसामरस्यमात्रक्रोडीकृ-

---

१५ योऽयं 'नत्वा नित्यविशुद्धौ' इत्यनेन लोकानुग्रहार्थं मङ्गलाचरणपूर्वकं विश्वोत्तीर्ण-विश्वमय-प्रथमपरिस्पन्दात्मप्रकाशस्वभावनिर्देशः कृतः तस्य रूपावतारापेक्षया अत्र विशेषार्थोऽपि यथा

'यदयमनुत्तरमूर्तिः
निजेच्छया निखिलमपि जगत्स्रष्टुम् ।
पस्पन्दे स स्पन्दः
प्रथमः शिवतत्त्वमुच्यते तज्ज्ञैः ॥'

इति । तदनुसारेण संघट्टपदेन त्रिकोणरूपतापि द्योतिता । तदुक्तं

'व्यापिनी बिन्दुविलसत्त्रिकोणाकारतां गता ।'

इति । एतदेवाग्रिमश्लोके सूचितम् 'हृदयत्रिकोण' इत्यादिना ।

१६ परशिवभट्टारकस्त्वत्र समनारूढोऽनाश्रितसंज्ञकः । यच्च अग्रे वक्ष्यते 'स्थूलेष्वपि' इत्यत्र श्लोके ।

तेच्छाज्ञानाद्युत्तरोत्तरशक्तिपरम्परापरिग्रहौन्मुख्यात् 'स्वशक्तिप्रचयोऽस्य विश्वम्' (३-३०) इति शिवसूत्रस्थित्या विश्वविक्षोभात्मकम् अन्तर्बहिःशक्तिविचित्रवैचित्र्यविजृम्भणोद्भूतोद्भावनप्रागल्भ्यस्वात्मचैतन्योद्वन्तृतापरिस्पन्दसारः प्रमातृविशेषः परमशिवभट्टारक[17] इति ॥ १३ ॥

अथ क्रमप्राप्तं शक्तितत्त्वं परामृशति

सोचिअ वीसंमिहतं
णाउं चुं उमुहो होतो ।
........................
................ ॥ १४ ॥

स एव विश्वमीक्षितुं
स्थातुं कर्तुं च उन्मुखो भवन् ।

१७ इत्थं चात्राशयः—यदा बीजानामुद्रेकस्तैरेव योन्याच्छादनं क्रियते, यदा च योन्युद्रेको बीजानामाच्छादनं क्रियते तदा, पीठचक्रावयवव्यूहैः साकारशिवशक्तियुगलकमुत्पद्यते इति ।

**शक्तिस्वभावः कथितो**
**हृदयत्रिकोणमधुमांसलोल्लासः**
**॥ १४ ॥**

य उक्तस्वभावः शिवः स एव शक्तिस्वभावः कथितः, तस्यैव किञ्चिदुच्छूनतायाम् या अवस्था तया शक्तिशब्दव्यपदेश्य इत्यर्थः, तस्य चायं स्वभावः—यद्धृदयरूपेण इच्छाज्ञानक्रियात्मकविश्वविकल्पपर्यायकाध्वत्रयसामरस्यलक्षणेन नित्यप्रवृत्तचर्वणोत्सवत्वात् अन्तर्मग्नसंविदानन्दस्पन्दसंधुक्षणरूपेण मधुना मांसलम् अत्यन्तबृंहितं परिचारक्रियार्हं महातडाकाम्भः संसारकल्पं 'बहु स्यां प्रजायेय' इत्याम्नायस्थित्या स्वयमेव स्वहृदयोद्यमवमनोपक्रमम् आत्मानमुल्लासमानाह्लादातिशयम् अनुभवति इति ॥ १४ ॥

अथ सदाशिवेश्वरौ पर्यालोचयति

**णाणं किअति दोयवि**
**पहंमुमेसंमि सल्लसिवो देवो ।**

6

वीयाए उल्लाहे
वील सो होइ ईसोरो णाम्
॥ १९ ॥

---

ज्ञानं क्रियेति द्वयोरपि
प्रथमोन्मेषः सदाशिवो देवः ।
द्वितीयाया उल्लेखे
द्वितीयः स भवति ईश्वरो नाम
॥ १९ ॥

ज्ञानं हि नाम अहंभावावभासनात्मा सर्वप्राणिनां स्वयं वेदनसिद्धस्वभावः, क्रिया च करचरणानुबन्धिनी सर्वसाक्षात्कारयोग्या परिस्फुरति, तत्र जानामि करोमि इत्यादिवत् जानामि इत्यादावपि आदर्शावलोकनादिन्यायात् अस्मच्छब्दार्थ एव युष्मदाद्यर्थतया अवभासते इति अहन्तैव सर्वत्र आत्मतत्त्वम् । यदुक्तं

'अस्तिशेषाः क्रियाः सर्वाः कार्यशेषं च कारकम् ।
एकशेषं च वचनं पुरुषश्चोत्तमावधिः ॥'

इति । अहन्तोल्लेखश्च ज्ञानशब्दार्थः । एवं करोषि करोमि इत्यस्यैव च परमार्थक्रियाविज्ञाने यत् अहंभावानुष्ठा इत्यवधार्यते केवलम् अस्याः इदंभाव प्राचुर्येण अनुभूयमानतया भेदव्यवहारः । एवं ज्ञानं क्रिया इति यौ भावौ तयोर्मध्ये प्रथमस्य ज्ञानस्य उद्रेके द्वितीयायाश्च अर्थात् अस्फुरणत्वरूपेण न्यग्भावे सति 'सदाशिवाख्यतत्त्वम्' इत्याख्यायते,—यदधिष्ठातृतया सदाशिव इत्येव नाम्ना कश्चित् विष्णुरुद्रादिसाधारण्येन उपपद्यते।

१८ अस्फुरणत्वरूपेणेति, वाक्क्रमानुसारेण पश्यन्त्यां क्रियाप्रारम्भस्य ज्ञानप्राधान्यात् क्रियाया अस्फुरणत्वम्, ततश्च नादप्रारम्भज्ञानावसानत्वं सदाशिवः – ज्ञानोद्रेकात्, अतश्चेदमप्यायातं – मध्यमायां ज्ञानप्रारम्भस्य क्रियाप्राधान्यात् ज्ञानास्फुरणत्वं, ततश्च ज्ञानप्रारम्भक्रियावसानत्वमीश्वरः–क्रियापरिभोगोद्रेकात् । तदुक्तं शिवदृष्टौ

'.........कदाचिज्ज्ञानशक्तितः ।
सदाशिवत्वमुद्रेकात्कदाचिदैश्वरीं स्थितिम् ॥
क्रियाशक्तिसमाभोगात्............ ।'

इति । एतदेव प्रकाशितं मालिनीनिर्णये परात्रिंशिकायाम् ।

स च देवः ईदृक्शक्त्यौत्कर्ष्यात् क्रियायाश्च अत्यन्तापकर्षभावात् क्रीडाव्यवहाराद्यनेकार्थानुसंधाने समर्थः, या च तत्र द्वितीया तस्या उल्लेखः स्फुरणापरपर्याये प्राचुर्ये ज्ञानस्य स्तैमित्ये सति ईश्वरो नाम इति भावः, 'ईश्वराख्यं तत्त्वम्' इत्याम्नायते, तदधिष्ठाता च कश्चित् ईश्वर एव प्रमाता। एतदुक्तं भवति – अहन्तेदन्तालक्षणयोर्ज्ञानक्रिययोराद्योद्रेकात् उन्मीलितचित्रन्यायेन व्यक्ताव्यक्तविश्वमातृतास्वभावं सदाशिवाख्यं तत्त्वम्। एतद्विपर्ययेण क्रियाशक्त्यौज्ज्वल्ये व्यक्ताकारविश्वानुसंधातृरूपम् ईश्वरतत्त्वमिति॥१५॥

अथ शुद्धविद्यामुद्योतयति

णायधरामो अंपा
णेअसहावो यं लोअववहारो।
एकेरसं सियाटी
जरु गसा सा खु णिंथुसां विंजा
॥ १६ ॥

पं० १ क० ग० पु० दृक्छक्त्युत्कर्षादिति पाठः।

ज्ञातृत्वधर्मा आत्मा
ज्ञेयस्वभावश्च लोकव्यवहारः ।
एकरसां संसृष्टिं
यत्र गतौ सा खलु निस्तुषा विद्या
॥ १६ ॥

ज्ञातृत्वधर्माविभिन्नोऽहंभाव आत्मा परमेश्वरः, तत्रैव चिच्छक्तिक्रोडीकार्यात्मीयसद्भावा लोकव्यवहारस्फुरत्ता परामर्शप्राणस्य प्रपञ्चप्रसरस्य हानोपादानादिरर्थक्रिया च इत्येतौ द्वावपि अन्योन्यप्रतीतिसामरस्यलक्षणं प्राप्ताविति योऽर्थः सा निस्तुषा शुद्धा विद्या, सा खलु इति प्रसिद्ध्युत्कर्षोपपादनम् ॥ १६ ॥

---

१९ निस्तुषेत्यत्र अयं भावः

'शिवशक्तिसदाशिवतामीश्वरविद्यामयीं च तत्त्वदशाम् ।'

इत्यत्र भावप्रत्ययेन प्रकृत्यर्थप्रत्ययेन च मायोत्तीर्णमायान्तर्वर्तिविभागद्वयं बोधितं, तथा च सति

'तुष इव तण्डुलकणिकामावृणुते प्रकृतिपूर्वकः सर्गः ।
पृथ्वीपर्यन्तोऽयं चैतन्यं देहभावेन ॥'

इत्येवं रूपं यदावरणं तत् तुषशब्देनोक्तं तद्रहिता निस्तुषेति ।

अथ मायाम् उन्मीलयाति

एकरसंमि सहीवं
उंभावंत्तीं विअंवसिंपाई ।
मायेति लोअवलणो
परमसुअतस मोहिणी संत्ती
॥ १७ ॥

एकरसे स्वभावे
उद्भावयन्ती विकल्पशिल्पानि ।
मायेति लोकपतेः
परमस्वतन्त्रस्य मोहिनी शक्तिः
॥ १७ ॥

परमेश्वरस्य हि असाधारणो भावो विश्वस्फुरत्तात्ममहासत्त्वोल्लासरूपो युक्तिपर्यालोचनात् एकरसः—स्वसंविदानन्दपरिस्पन्दसौन्दर्यमात्रसारतया, तेन पुनः विकल्पनोल्लंघनौचित्येन भेदवा-

दस्य अपवदिष्यमानत्वात्, एवंस्थितेऽपि तत्रैव चैत्र-मैत्र-स्तम्भ इत्यादयो ये विकल्पाः कटकमुकुटाद्याकल्पशिल्पवत् भेदावभासबाहुल्येऽपि चारुत्वचमत्कारितया हृदयंगमाः सन्तो वेद्यविलासाः तानि उपर्युपरि उन्मीलयन्ती, तत एवमपि बन्धविभीषिकया बद्धमिव मुक्त्यभिमानेन व्यत्यासयन्ती शक्तिर्माया इत्युच्यते, यतोऽयम् ईश्वरः परमस्वतन्त्रः, इयमेव हि तस्य स्वातन्त्र्योत्कर्षकाष्ठा यत् स्वात्मावभासैकात्मजीवितजातिभेदप्रभेदवैचित्र्योत्पादनप्रावीण्यम्—येन अतिदुर्घटकारी परमेश्वर इत्याद्युद्घोष्यते, अत एव असौ लोकपतिः देहाक्षभुवनादेः प्रपञ्चस्य ईश्वरः। मायाव्यतिरेकेण भेदप्रथापारमार्थ्यस्य प्रपञ्चस्य अभावः, तदभावे च तत्प्रातियोगिकस्य परमेश्वरस्य ऐश्वर्यानुपपत्तिरिति न किंचिदपि ऊह्येत, तदिदं माया नाम, तस्य उत्कृष्टं स्वातन्त्र्यम्। यदुक्तमस्मद्गुरुभिर्मनोऽनुशासनस्तोत्रे

पं० ५ क० ग० पु० एकं मुक्तमपि इति पाठः।

'स्वातन्त्र्यापरपर्यायमायाजाड्यविलोपनात् ।
विलीय तद्रसीभूतं विश्वानन्दमुपास्महे ॥'

इति ॥ १७ ॥

अथ मायाविभूत्यात्मकं कलादिपञ्चकम् अर्थद्वारा परीक्षते

संबअरो संवंणू
पुंणो निंचो असंकुअ ।
विपरीदं व महेसो
जाही ता होन्ति पंचसतीला
॥ १८ ॥

---

सर्वकरः सर्वज्ञः
पूर्णो नित्य असंकुचितश्च ।
विपरीत इव महेशो
याभिस्ता भवन्ति पञ्चशक्तयः
॥ १८ ॥

परमेश्वरो हि विश्वस्य कर्ता, ज्ञाता च। तत एव स्वातन्त्र्यात् पूर्णः स्वात्मतृप्तश्च प्रार्थनीयाभावात्। स्वव्यतिरिक्तस्य अवच्छेदकस्य कस्यचिद्भावस्य असद्भावात् नित्यः—प्राक्प्रध्वंसाभावलङ्घी। तत एव संकोचलक्षणनियन्त्रणाशून्यः। तादृशोऽपि सन् असौ याभिः शक्तिभिः निबन्धनीभूताभिः विपरीत इव किंचित्कर्तृत्वादिधर्मयुक्त इत्यवभासते, ताः पञ्च शक्तयो भवन्ति। तदुक्तं श्रीक्रमोदये

> 'रागो माया कला विद्या नियतिः काल एव च।
> पञ्चकृत्याश्रयाः सर्वे पाशाश्चेति प्रकीर्तिताः॥'

इति। कला तस्य किंचित्कर्तृत्वहेतुः, विद्या किंचिज्ज्ञातृत्वकारणं, रागो विषयेषु अभिष्वङ्गः, कालो भावाभावानां भासनाभासनक्रमः, नियतिः मम इदं न मम इदम् इत्यादिनियमहेतुः, एतत्पञ्चकं च आगमेषु स्वरूपावरकत्वात् कञ्चुकम्

पं० ८ क० पु० धर्मयुक्त इवाभासहेतोरिति, ग० पु० अवभासहेतुभूता इति पाठः।

इत्युच्यते। एतदभावे हि पुरुषः परमेश्वरवत् अतिप्रकटबोधशक्तिः, अन्यथा पाषाणवत् अत्यन्तनिमग्नैश्वर्यो भवेत् ॥ १८ ॥

अथ पुरुषस्वभावम् उन्मीलयति

**जो एस वीसांणांधअ**
**सेलसो सुधसंविलसंभू ।**
**वण्णअ परिगमई**
**तंस दसा कावि पूरुसो होई**
**॥ १९ ॥**

---

**य एष विश्वनाटक-**
**शैलूषः शुद्धसंविच्छम्भुः ।**
**वर्णकपरिग्रहमयी**
**तस्य दशा कापि पुरुषो भवति**
**॥ १९ ॥**

परमेश्वरो हि अहमेव सर्वम् इति वैश्वात्म्यप्रथानुभूतिसारचमत्कारोत्तरतया शुद्धां संकोचकलङ्कशंकाशून्यां संविदं स्वातन्त्र्यस्वभावविद्यामयीम् अनुभवन् अनेनैव हेतुना 'नर्तक आत्मा' (३-९) इति शिवसूत्रस्थित्या विश्वनाटकस्य शैलूषो नट इति व्यपदिश्यते। विश्वं च पृथिव्यादिशिवान्तं तत्त्वसन्दोहात्मकं, स च शंभुः शृङ्गारकरुणादिरसास्वादनीयशब्दस्पर्शाद्यनुभवात्मकं शं सुखं प्रेक्षकाणामिन्द्रियाणां भवति अस्मात् इति कृत्वा, तस्य च विश्वनाट्याद्यभिनयोन्मुखस्य भूमिकावलम्बनलक्षणेन अर्थेन या अवस्था सा पुरुषो भवति 'पुरुष' इति व्यपदेशौचित्यम् अनुभवति ॥ १९ ॥

अथ प्रकृतिं प्रकटयति

**णाण-किआ-माआणं**
**गुणाण सभरअह पहवाणं।**

अविहाआ पंथाय
तत्तपआडिडत्ति संभवी सत्ती
॥ २० ॥

---

ज्ञानक्रियामायानां
गुणानां सत्त्वरजस्तमः स्वभावानाम्।
अविभागावस्थायां
तत्त्वं प्रकृतिरिति शांभवी शक्तिः
॥ २० ॥

ज्ञानं नाम प्रकाशः, क्रिया विमर्शः, माया तु अहमिदम् इदमहम् इति किंचिद्भेदप्ररोहेऽपि सदाशिवेश्वरावस्थापदाहन्तापर्यवसायिनी शक्तिः, तासां परमेश्वरशक्तिभूतानामपि व्यामोह्यमानपशुजनापेक्षया गुणत्वं, याभिः सुखदुःखमोहात्मकोऽयं लोकव्यवहारः, तन्मयीनां च तासां या विभागशून्या तुलाधारणवत् अत्यन्तावैषम्यशा-





लिर्न्यवस्था, तस्यां पर्यालोच्यमानायां प्रकृतिरिति तत्त्वं भवति ॥ २० ॥

अथ अहंकारबुद्धिमनांसि तत्त्वद्वारेण उपदर्शयति

त्यंल्लोलंताल सह
हिअअंबुणिहिमि तिणिं कलपाणं ।
आअढंतिल दंतं
तथ अहंथं व एवथ ऊवति ॥२१॥

---

कल्लोलायमानानि सदा
हृदयाम्बुनिधौ त्रीणि करणानि ।
आकर्षन्तीदन्तां
तथा अहन्तां च अत्र अर्पयन्ति २१

इति व्याख्यातरूपं स्वहृदयं चैतन्यं सर्वसत्त्वास्पदत्वादिना धर्मेण

---

पं० ३ ग० पु० बुद्धिमनसां तत्त्वमर्थद्वारेणेति पाठः ।
पं० १२ क० पु० तद्वदहन्तामिति पाठः ।

'नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ।'

इति स्थित्या समुद्रतया अध्यवसीयते । तत्र कालविशेषावच्छेदात् महातरङ्गवत् आचरन्ति त्रीणि करणानि प्रमातृरूपस्य कर्तुः साधकतमानि इन्द्रियाणि विद्यन्ते, तानि च यथा इदन्तानुप्राणितां विषयवैचित्र्यसम्पदं हृदयान्तराकर्षयन्ति हठात् अनुप्रवेशयन्ति, तद्वत् अहन्तासारां स्वहृदयचिच्छक्तिमपि अत्र वेद्यभूमौ अर्पयन्ति, अनैसर्गिकत्वेऽपि नैसर्गिकतया अनुभावयन्ति । तानि च अहंकारो बुद्धिर्मन इति व्यवह्रियन्ते, तत्र मम इदम्, न ममेदम् इति आत्मनोऽभिमानसाधनम् अहंकारः, अध्यवसायनिमित्तं बुद्धिः, संकल्पविकल्पहेतुः मनः । अयमर्थः – अहंकारादीनि आत्मनोऽन्तःकरणानि न केवलं बहिरवलोकितान् विषयान् अनुभावयन्ति, किं तर्हि स्वयम् आक्रान्तया प्रमातृचिच्छक्त्या अन्तर्वर्तिनमखिलमपि वेद्यवर्गं विषयीभावयोग्यतानुप्रवेशार्थं प्रकाशस्वभावतापादनात्मकपावनी-

offer

करणयुक्त्या अनुगृह्णन्ति, इति कल्लोलायमानानि। एतानि हृदयमहाम्बुराशौ महातरङ्गा इव, ज्ञानेन्द्रियाणि तु तरङ्गानुतरङ्गन्यायम् अनुवर्तन्त इत्यर्थः ॥ २१ ॥

अथ ज्ञानेन्द्रियाणि उन्मुद्रयति

हिअअंबिअंस वि गुणो
बिसआलोऊ तिसिंखलो होइ।
णाणंदिअदीपेस
णिअंस-णिअंस-गोलंगाणिंवेत्तुंगेऊ
॥ २२ ॥

---

हृदयस्थितस्य हि विभो-
र्विषयालोको विशृंखलो भवति।
ज्ञानेन्द्रियदीपेषु
निजनिजगोलाग्रनित्यलग्नेषु ॥ २२ ॥

विभोः परमेष्ठिनः परमस्वातन्त्र्यशालिनः स्वशक्त्यवच्छिन्नाशेषदेशकालस्वभावस्य महाप्रकाशस्य तदुचितं किंचित् सर्वोत्कृष्टं स्थानमस्ति यद्धृदयं नाम । तत्र अवस्थितस्य चास्य बाह्यानां शब्दस्पर्शादीनां विषयाणामालोकः आ समन्तात् लोकनं साकल्यं तत्स्वान्तश्चर्वणचातुर्यात् विशृंखलो भवति । बहिर्भावस्वभावनियन्त्रणातिक्रान्तो भवतीत्यर्थः । तत्र तत्र च एतदेव निबन्धनं — यत् ज्ञानप्रधानानाम् इन्द्रियाणां प्रदीपप्रायाणां ये निजनिजास्तत्तदसाधारणा गोलाः श्रवणशुष्कुल्यादयः तदग्रेषु बहिर्विषयोन्मुख्यानुगुणेषु प्रदेशेषु सार्वकालिकं लग्नं स्फुरत्तया अवस्थानम्, तानि च — श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणम् इति पञ्चधा भिद्यन्ते, शब्दस्पर्शरूपरसगन्धानां ग्राह्यानां क्रमेण ग्रहणोपकरणत्वादेषां कारणत्वं लक्षणम् ॥ २२ ॥

पं० ६ ग० पु० तस्यान्तश्चरणेति पाठः ।

अथ कर्मेन्द्रियाणि उन्मीलयति

होन्ति कलणाई पर्वहं
कंयपहीणाइ लोअणाहंस ।
कन्दल-सेरं जहिं
जनो जडादेविलषणो हातो ॥२३॥

---

भवन्ति करणानि पञ्च
कर्मप्रधानानि लोकनाथस्य ।
स्पन्दते स्वैरं यै-
र्जनो जडाद्विलक्षणो भवन् ॥२३॥

यो लोकनाथः सृष्ट्यादिनिर्वाहकतया स्वामी, तस्य कर्मप्रधानानि 'ज्ञानेन्द्रियाणां क्रियास्पर्शेऽपि ज्ञानप्राचुर्यवत्' ज्ञानानुषङ्गेऽपि क्रियाशक्त्युद्भटानि पञ्चेन्द्रियाणि भवन्ति। खलु प्रसिद्धौ, यैर्निमित्तभूतैर्जनो जननमरणाद्युपहतोऽपि जीववर्गः जडात् स्तम्भकुम्भादेः परिच्छिन्नप्रकाशात्

अर्थात् व्यतिरेकतामश्नुवानः स्पन्दते ईषच्चलति। स्वैरमिति – स्वस्य उन्मीलनस्य उपकरणस्य प्रेरणं यथा भवति तथेत्यर्थः, तादृक् स्वातन्त्र्यमेव अस्य अपरिच्छिन्नप्रकाशत्वं, तानि च वाक्पाणिपाद-पायूपस्थाः इति, भिद्यन्ते ॥ २३ ॥

कर्मेन्द्रिय

अथ शब्दादिपञ्चकं विविनक्ति

वीसंकोणविरूढे
गंथप्रमह अन्धिर पुंके।
पञ्च वि घंद्याअको
कीलभे ह्लोङ्क-धुंऊंदैवे ॥ २४ ॥

---

विश्वोद्यानविरूढानि
गन्धप्रमुखानि सुगन्धीनि पुष्पाणि।
पञ्चापि आजिघ्रन्
क्रीडति त्रैलोक्यधूर्तो देवः ॥ २४ ॥

त्रैलोक्ये मानमेयमातृरूपे विश्वस्मिन्नपि यो धूर्तः वैदग्ध्यावधारितव्यवहारकलापः सद्योतनस्वभावत्वात् महाप्रमाता भवन् विश्वलक्षणादुद्यानादुत्पन्नानि पृथिव्याद्यसाधारणगुणवर्गम् अङ्गीकृत्य प्रवृत्तानि सुगन्धीनि प्रकाशपरिमलपरिस्फुरणोद्भटानि पञ्चापि प्रसूनानि आजिघ्रन् ग्रहणं प्रति किंचित्कौटिल्यद्वारेऽपि आर्जवेन अनुसंदधानः क्रीडति—हर्षानुसारेण स्पन्दते स्वातन्त्र्यक्रियामुपदर्शयति इति यावत्। ज्ञानविषयाः—शब्दस्पर्शौ रूपं रसो गन्ध इति। एषां च क्रमादाकाशादिगुणत्वं श्रोत्रादिग्राह्यत्वं वा प्रातिस्विकं लक्षणमूह्यम्। यदुक्तम् अभियुक्तैः

'इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवताः।
स्वभावेन समाराध्या ज्ञातुः सोऽयं महामखः॥'

इति। गन्धप्रमुखानि गन्धप्रधानानि, इति संहारक्रमेण उक्तिः॥ २४॥

---

पं० १२ ग० पु० प्रातिबिम्बिकमिति पाठः।

अथ भूतपञ्चकम् उद्भावयति

थिणंसं कामसच्छादो
लंखु-रसंसव शिवपआसस ।
गुरुपिण्डा इव पञ्चवि
भूतालं मदुरण मुचयंत्ति ॥ २९ ॥

स्त्यानस्य क्रियावशात्
इक्षुरसस्येव शिवप्रकाशस्य ।
गुडपिण्डा इव पञ्चापि
भूतानि मधुरतां न मुञ्चन्ति
॥ २९ ॥

शिवात्मा खलु प्रकाशः शक्तिसदाशिवादिपरिपाट्यनुसारेण प्रस्तुतभूतपञ्चकपर्यन्तं स्त्यानीभवति—वेदितृस्वभावन्यग्भावात् वेद्यतोत्कर्षात्मकं काठिन्यमनुभवति, तादृशस्य च अस्य मधुरतां सर्वप्रमातृस्वभावेन अनुभाव्य परमशिवप्रकाशोल्लासात्मकमहाह्लादोपभोगलक्षणं सामरस्यं पञ्चापि

भूतानि आकाशप्रभृतीनि न परित्यजन्ति, किं तु स्वान्तरखिलं गर्भीकृत्य प्रवर्तते केवलं शिवात् स्वच्छस्वभावात् स्त्यानताधिक्यम् एतेषां भेदः, यद्वत् इक्षुरसस्य स्वपाकयुक्तिक्रमात् स्त्यानीभूतस्य माधुर्यं गुडपिण्डेन न परित्यज्यते, ततश्च पृथिव्याद्यनाश्रितशिवप्रभृतीनि पञ्चत्रिंशदपि तत्त्वानि कारणवासनानुवृत्तिद्वारा परिस्फुरन्ति, इत्यनया भङ्ग्या तत्र शिवतत्त्वे पृथिव्यादीनि सर्वाण्यपि सत्कार्यवादमर्यादया अवतिष्ठन्ते। एवं प्रकृतिपुरुषादिषु मध्यवर्तिष्वपि उक्तोभयप्रक्रियया सर्वाणि उपरितनानि अधस्तनानि च तत्त्वानि संमिलन्ति इति सर्वं सर्वात्मकम् इत्यर्थनिष्कर्षः ॥ २५ ॥

उक्तरूपस्य तत्त्वप्रपञ्चस्य पिण्डीभूतमर्थसतत्त्वम् आह

संवंस भुवण विंमम-

यंतुलोसेसि तोत्तवह्लिं वे ।

विमरिससंरम्भमयी
उज्जिंमल सभुणो महता सत्ती
॥२६॥

---

सर्वस्य भुवनविभ्रम-
यन्त्रोल्लासस्य, तन्तुवल्लीव ।

१ भुवनविभ्रम एव यन्त्रोल्लासस्तस्य तन्तुवल्लीव, यथैव तन्तुप्रोताः श्रीयन्त्रादयो यन्त्राः कण्ठभुजादिस्थाने निबध्यन्ते तथैव यत्प्रोतो भुवनविभ्रमः परमशिवनिबद्धो भवति । यदुक्तं श्रीभगवद्गीतासु

'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७–७ ॥
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ९–६ ॥

इति । विमर्शसंरम्भः – अन्तःस्फुरत्तानुत्तरस्वातन्त्र्यात्मिका शुद्धविद्या । तथा चोक्तम्

'मूलाधारे तडिद्रूपे वाग्भवाकारतां गते ।
अष्टत्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ।
विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ।
तडित्कोटिनिभा प्रख्या बिसतन्तुनिभाकृतिः ।
व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी ।
यया व्याप्तं जगत्कृत्स्नं पराद्वयस्वरूपकम् ।
एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वर ।'

इत्यादिना ।

विमर्शसंरम्भमयी
उज्जृम्भते शंभोर्महाशक्तिः ॥२६॥

येयं भुवनानां तत्त्वात्मनां विभ्रमो विलासः प्रसरद्रूपता सैव दार्वादिसंघट्टनात्मानं प्रति पुत्रिकादेः यन्त्रस्य उल्लासः, सोऽयं — संयोजनवियोजनवैदग्ध्यशालिनः परमशिवभट्टारकस्य शक्तिः स्वातन्त्र्यलक्षणा महती तत्त्वानामन्योन्ययोज्ययोजकभावेन पर्यन्ततः सामान्यप्रयोजकत्वे प्रगल्भा वृत्तिः उज्जृम्भते — पृथिव्यादिभाववर्गमिव अनाश्रितशिवभट्टारकमपि क्रोडीकृत्य अभिवर्धते तत्तद्रूपतया परिस्फुरति इत्यर्थः । सा च विमर्शसंरम्भमयी — विमर्शाख्यो यः संरम्भः स्वान्तः स्फुरन् क्रियाशक्तिस्पर्शरूपः तेन प्रकृतेत्यर्थः, या चिदानन्देच्छाज्ञानक्रियारूपशक्तिपञ्चकसामरस्यस्वभावा व्याख्यायते । ततश्च परमेश्वरपरामर्शप्रसरपरिपाटीपाटवपरमार्थमेतत् अखिलतत्त्वपरं परम्परापरिस्फुरणप्राचुर्योज्ज्वलं विश्वविजृम्भावैचि-

ऽयम् इति तात्पर्यार्थः । शंभुरत्र अनुत्तरात्मा, तस्य तादृशी शक्तिश्च तदभिन्नस्वभावा स्वरस-मुदायमयी विसर्गापरपर्याया इति वर्णक्रमानुगु-ण्येन व्याख्या ॥ २६ ॥

ननु अध्वानो हि षट् इति आगमेषु प्रसिद्धाः, तत्र तत्त्वमाला कश्चिदेव अंशः, अत्र तु कथम् उक्तार्थोपपत्तिरिति आकांक्षां क्षपयन् प्रकृतगा-थातात्पर्यमाह

जंअन्धानअं षकं
तंथ पआसंथलंरवणंअंथ ।
विमरिससन्दसहावं
अधंति सिवसत्ति जामलंलोसो
॥ २७ ॥

---

यदध्वनां च षट्कं
तत्र प्रकाशार्थलक्षणमर्थम् ।

विमर्शशब्दस्वभाव-
मिति शिवस्य यामलोल्लासः
॥ २७ ॥

अध्वानो हि षट् इति आगमेषु प्रसिद्धाः, ते च – वर्णाः पदानि मन्त्राः कला तत्त्वानि भुवनानि इति आभण्यन्ते। तत्र वर्णाः पञ्चाशत् – लोकप्रसिद्धाः। पदानि आनन्त्येऽपि व्योमव्याप्यादिमन्त्रमर्यादया एकाशीतिः,। मन्त्राश्च तद्वत् आनन्त्येऽपि ब्रह्मपञ्चकम् अंशषट्कं च इति संकोचदृष्टया एकादश। कला निवृत्त्यादयः पञ्च। तत्त्वानि उक्तरूपाणि षट्त्रिंशत्। भुवनानि च कालाग्निरुद्रादीनि अनाश्रितान्तानि चतुर्विंशत्यधिकशतद्वयम्, इत्येतदखिलमपि कलापञ्चकेन क्रोडीक्रियते। तथा हि – निवृत्तौ कलायां क्षकार एको वर्णः अष्टाविंशतिपदानि हृदयसद्योजातौ मन्त्रौ पृथिवीतत्त्वमेकं कालाग्निरुद्रादीनि भद्रकाल्यन्तानि अष्टोत्तरशतं भुवनानि। प्रतिष्ठायां

हादयष्टान्ता वर्णाः त्रयोविंशतिः एकविंशतिपदानि शिरोवामदेवौ मन्त्रौ अप्तत्त्वादिप्रकृत्यन्तानि त्रयोविंशतितत्त्वानि अमरेशादीनि श्रीकण्ठान्तानि षट्पंचाशद्भुवनानि । विद्यायां ञादिघान्ताः सप्त वर्णाः विंशतिः पदानि शिवोऽघोरश्च इति मन्त्रद्वयम् पुरुषप्रभृतीनि मायापर्यन्तानि सप्ततत्त्वानि, भीमादीनि अंगुष्ठमात्रान्तानि च सप्तविंशतिर्भुवनानि । शान्तौ तु गखकाः त्रयो वर्णाः पदानि एकादश कवचतत्पुरुषमन्त्रौ शुद्धविद्येश्वरसदाशिवास्त्रीणि तत्त्वानि कलादिसदाशिवान्ता अष्टादश भुवनानि । शान्त्यतीतायां च वर्णाः षोडश स्वराः पदमेकं शिव-ईशान-अस्त्रम् इति मन्त्रत्रयं शिवतत्त्वमेकं यः शक्तिस्वभाव इति आम्नायते निवृत्त्यादीनि अनाश्रितान्तानि पंच भुवनानि इति विवेकः । एवं सति यदेतदध्वनामुक्तस्वरूपाणां षट्कं तत्र यदेतदर्थं भुवनतत्त्वकलास्वभावम् अन्यत्तु वर्णमन्त्रपदात्मकं प्रत्येकं च स्थूलसूक्ष्मपरप्रक्रियया त्रैविध्यं,

तत्र भुवनादि प्रथममभिधेयभूतं वर्णमन्त्रादि द्वितीयमभिधानमिति विवेकः । तथा च सति वाच्यवर्गः सर्वोऽपि प्रकाशपरमार्थः, वाचकोल्लेखस्तु विमर्शवपुरिति शिवस्य प्रकाशविमर्शात्मनः परमेश्वरस्य यामलमुभयसंसर्गारणिस्वभाव उल्लासः—उन्मेषनिमेषशक्तिद्वितययौगपद्यानुभूतिचमत्कार इत्यर्थः । तथैव श्रीविज्ञानभैरवेऽपि

'भुवनाध्वादिरूपेण चिन्तयेत्क्रमशोऽखिलम् ।
स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः ॥' (५६)

इति ॥ २७ ॥

एवमुक्तरीत्या विश्ववैचित्र्यस्य सर्वस्यापि प्रकाशविमर्शान्तर्भावम् उपपाद्य तयोरपि भावः पर्यन्तत औपचारिक इत्याह

आलंसंविथेसुमि व
गयपुंमहाणीवसुवेणि पडिहासं ।

एंकसिंश्चिअअंथे
सिवसत्तिविहाअंपणं कुडिमो
॥ २८ ॥

आलेख्यविशेष इव
गजवृषभयोर्द्वयोरपि प्रतिभासः।
एकस्मिन्नप्यर्थे
शिवशक्तिविभागकल्पनां कुर्मः
॥ २८ ॥

चित्रकृतोऽपि हि स्ववैदग्ध्यप्रकटनाय गजवृषभादीनां भिन्नस्वभावानामपि भावानामेकतरसंनिवेशयुक्त्या ऐक्यावभासः, अन्यतरसंनिवेशयुक्त्या न ऐक्यावभासश्च। एवं स्थिते यथा चित्रविशेषे गजवृषभयोः द्वयोरपि पर्यालोचकप्रमातृज्ञानानुसंधानधाराधिरोहवैशिष्ट्येन कुम्भमण्डलशुण्डामण्डलीभावादियोगात् ककुद्कूटादिक्रमाच्च

प्रतिनियतो भासः प्रकाशनं भवति, तद्वत् एकस्मिन्नेव अर्थे सर्वेषां पर्यन्ततः प्राप्ये तत्त्वे शिवः शक्तिरिति प्रकाशो विमर्श इत्येवंविधो यो विभागः विचित्रस्वभावानतिक्रान्तोऽपि अतिक्रान्त इव आभासनांशः तस्य यत् कल्पनं स्वतस्तादवस्थ्यसामर्थ्यं तत्समर्थाचरणेन[२०] उन्मीलनं कुर्मः जानीमो वदामोऽनुतिष्ठामश्च ॥ २८ ॥

ननु बहवोऽपि पुराणागमादिप्रसिद्धाः प्रमातारः, तेषु न कस्यचिदपि एतादृशी शक्तिरस्ति यादृक् परमेश्वरस्य इत्याशंक्याह

**तिलमेत्तेपि शरीरे**
**पंसह कीडंस एत्तिई सत्ती ।**
**सा सहंचंव्यु सिरणो**
**वीससरीरंस केतिही होउ ॥२९॥**

२० तत्समर्थाचरणेनेति, संवित्स्वातन्त्र्यात्पूर्वोक्तबीजयोन्युद्रेकप्रकारेणेति बोध्यम् ।

पं० ५ क० ग० पु० तादस्थ्यसामर्थ्यमिति पाठः ।

तिलमात्रेऽपि शरीरे
प्रेक्षध्वं कीटस्यैतावती शक्तिः ।
सा स्वच्छन्दाश्रियो
विश्वशरीरस्य कियती भवतु
॥ २९ ॥

परमेश्वरो हि विश्वशरीर इति आगमेषु आख्यायते, यः पुनर्मषकादिः कीटविशेषः तस्य शरीरं तावत् तिलसदृशसंनिवेशनम् तावत्यपि तत्र तस्य शक्तिः कियती?– इति प्रेक्षध्वं, परिस्फुरणपरिभ्रमणादिभेदात् अनेकरूपा अनुभूयते 'लोट् प्रत्ययो बहुवचनं च' तत्रार्थे प्रामाण्यम् उद्घाटयितुम्– तस्य विश्वशरीरस्य सा कियती भवतु एतावती एतादृशी भवतीत्यर्थः ॥ २९ ॥

ननु विश्वशरीरतया परमेश्वरस्य शक्त्युच्छ्रायकल्पनम् इति चेत् क्रियते तर्हि विश्वसंहारे तस्य शक्तिन्यूनताप्रसंगः?– इत्याशंक्याह

वीसुमेस-दसार
देसहसणाहंस जंतिले पसरो।
कललावत्थायेटिल
वीसणिंअसेवि तिलहोलो ॥३०॥

---

विश्वोन्मेषदशायां
दैशिकनाथस्य यावान्प्रसरः।
कललावस्थायां
विश्वनिमेषेऽपि तावान्भवति
॥ ३० ॥

विश्वस्य उन्मेषलक्षणायामवस्थायां यावान् प्रसरः षडध्वोल्लासप्रथासतत्त्वो भवति, तथा विश्वस्य निमेषे कललावस्थायां तावान् उन्मेषदशासमस्वभावो भवति, यथा शिखण्ड्यण्डे सर्वशि-

---

यदुक्तम्

'शक्तितत्त्वं तु षट्कं शिवतत्त्वं तथैव च।'

इत्यादिना।

ख्यवयवानुप्रविष्टवर्हपरिवर्हादिपूर्णरेखादिवैचित्र्य-शिल्पकल्पनाकौशलमपि एतत्सूक्ष्मेक्षिकावधार्य-मङ्गीक्रियते । एवमत्रापि ॥ ३० ॥

ननु उन्मेष एव निमेषो निमेष एव उन्मेषो विश्वमयस्य विश्वोत्तीर्णस्य च,—इत्येषा महती व्याहतिरित्याशंक्याह

तिवुडिमसंखुसमत्थं
तंथ णेअंसि अ णइये अ समम्।
दिढंगण्णाण्डीणकला
कलेइ तेलोङ्कमेककलम् ॥ ३१ ॥

---

त्रिपुटीमयं समस्तं
तत्र च ज्ञेये च ज्ञातरि च समम्

---

त्रिपुटीमयमिति, अनेनैवाभिप्रायेणान्यत्राप्युक्तम् ।

'ज्ञातारं मां ज्ञानं शक्तिरिव त्रितयवज्ज्ञेयम् ।
अविभक्तं भावयतः सोऽहं सा तत्रयं तच्च ॥
वेद्यं स्वक्रमसिद्धां वित्तिमनुप्रविशदङ्गविषयाद्यम् ।
वेदितरि वित्तिमुखतो लीनं तल्लक्षणं भवति ॥'

इत्यादि ।

# दृढग्रन्थिर्ज्ञानकला
# कलयति त्रैलोक्यमेककलम्
॥ ३१ ॥

विश्वव्यवहारे सर्वोऽपि प्रपञ्चो 'ज्ञाता ज्ञेयं ज्ञानम्' इत्येवंरूपपुटत्रयसमाहारात्मनि अर्थतत्त्वे पर्यवस्यति, पुटत्वं च एषाम् अशेषविश्वक्रोडीकारसामर्थ्यात्, तत्र च त्रिपुट्यन्तरालवर्तिनी या ज्ञानकला चिच्छक्तिः, सा खलु

'वेद्यमेतदखिलं स ईश्वरो
वेदिता यदनयोश्च लक्षणम् ।
त्वामृते सुमुखि वृत्तिमन्तरा
को नु उद्घटयितुं प्रगल्भते ॥'

इति श्रीकोमलवल्लीस्थित्या विषयतयावरोध्यं वेद्यवर्गं भोक्तृतया स्फुरन्तं वेदितारं च प्रति समं विशेषशंकाशून्यं यथा भवति तथा, दृढग्रन्थिः कोटिद्वय[21]ावगाहनेन तादात्म्येनोपश्लेषाद्वज्रलेपव-

२१ ज्ञातरि अन्त्यकोटौ लग्ना सदाशिववत् ज्ञेये चादिकोटौ ईश्वरवत्, इति कोटिद्वितयं मिलितमेव ।

10

दकम्प्यसंबन्धा भवन्ती त्रैलोक्यमेककलम् — एक-
स्वभावं कलयति ॥ ३१ ॥

ननु सर्वैकरसवादस्वीकारोऽयं न सत्यासत्ययोः भेदः ? इत्याशंक्याह

की संभावविसेसो
कसुमादो होओ गगणकुसुमंस ।
जंपुरणाणंपाणो
लोलो फुरणं अ सोव्वं सामंणं
॥ ३२ ॥

---

कः सद्भावविशेषः
कुसुमाद्भवति गगनकुसुमस्य ।
यत्स्फुरणानुप्राणो
लोकः स्फुरणं च सर्वसामान्यम्
॥ ३२ ॥

प्रसिद्धकुसुमात् गगनकुसुमस्य सद्भावे को

विशेषः ? इति चेन्न कश्चित्, —इति वाक्यार्थोपसंहारः । यदिति—यतो लोको हि ' विश्वव्यवहारे संविदेव भगवती विषयसत्त्वोपगमे शरणम् ' इति गुरुमतमर्यादया स्फुरणं प्रकाशमेव अनुप्राणतया बीजभूततया परिगृह्य वर्तते—इति असकृत् अवोचाम । तच्च स्फुरणं विप्रतिपन्ने खपुष्पादौ संप्रतिपन्ने चम्पकादौ च सामान्यं—समपातेन प्रसरति, यदि च तस्य विप्रतिपातेन प्रवृत्तिः तत् खपुष्पमपि न स्फुरेत् । अत एव उक्तम् आचार्याभिनवगुप्तपादैः

' सा स्फुरत्ता महासत्ता ……… ।'

इति कारिकाया व्याख्यावसरे—सा हि खपुष्पादिकमपि व्याप्नोति इति, यथा शिवदृष्टौ

' शशशृंगादिकेनापि स्याद्विभक्त्या समन्वयः '

इति, पदसंगतौ च तस्मात् तत्रापि विभक्तियोगेन कारकत्वे सति सत्तैव शिवताख्या इति ॥ ३२ ॥

ननु आसतामेते व्योमकुसुमादयः यत्र मूकी-

भावो दूषणं भूषणं वा इति न अत्यन्तमुपयोगः; यत्र पुनर्यौ भावाभावौ लोकव्यवहारसिद्धौ तत्र कथम् इदम् अभेदवादवैदग्ध्यम्? इत्याशंक्याह

---

माणिक्कमरअआण
भेदाभेदयोर्भेदपडिहासम् ।
एकरसोणोणंदोणंवि
दुःपुमफरणसंभेला ॥ ३३ ॥

---

माणिक्यमरकतयोरिव
भावाभावयोर्भेदप्रतिभासम् ।
एकरसोऽन्योन्यमपि
द्वयोः प्रमार्ष्टि स्फुरणसंभेदः
॥ ३३ ॥

भेदाभेदप्रतिभासं स्तम्भकुम्भादेः स्फुरणसंभेद एव प्रमार्ष्टि—युक्त्या तिरस्करोति, प्रकाशमानता

---

पं० १४ क० पु० प्रकाशमानतातिस्फुरणतेति पाठः ।

हि स्फुरणतैव, संभेदः संबन्धः, स च एकरसः – पदार्थद्वयं प्रति एकस्वभावः, तयोर्द्वयोरपि 'प्रकाशते' इति प्रतीतिं प्रति वैषम्याभावात्। ततश्च चिदग्निसात्कृतयोरनयोः किं नाम वैलक्षण्यम् इति भावः। यथा माणिक्यमरकतयोः रक्तश्यामयोरन्योन्यविरुद्धयोरपि किंचित्संनिकर्षेण च स्थापितयोः परस्परप्रभापटलकर्बुरीभावात् एकरसो भवन् प्रकाशमानतासंभेदो भेदप्रतिभासं प्रमार्ष्टि – उभयोरपि स्वरूपपरित्यागात् एकतानुप्रवेशात्, यतो माणिक्यमपि अरुणश्यामलं मरकतमपि श्यामलारुणम् इति वैचित्र्यशालिनी प्रतीतिरत्र उत्पद्यते ॥ ३३ ॥

ननु पौनःपुन्येन प्रसाधितमपि एतदर्थतत्त्वं तडिद्विलसितवत् केवलं परिस्फुरति न पुनः हृदयंगमीभवति, हृदयंगमीभावे च कश्चित् उपायो वक्तव्यः? इत्याकांक्षायां पारमेश्वर्या सपर्यया तत् संपाद्यम्, इति तावत् देवतां पर्यालोचयति

अण्डमे णिअपिण्ड-
पीडेमि फुरन्ति कलणदेवील
पंफुरव परसिवो
णाणणिंती तासं त्यआणमी
॥ ३४ ॥

---

अण्डमये निजपिण्ड-
पीठे स्फुरन्ति करणदेव्यः ।
प्रस्फुरति च परमशिवो
ज्ञाननिधिश्च तासां मध्ये॥३४॥

---

स्वशरीरमयो हि पिण्डः—पृथिव्यादिभूतपंचकारब्धत्वात्, अशेषविचित्रलक्षणमण्डम् इति अध्यवसीयते । अण्डपिण्डयोश्च एकरूपत्वमाम्नायेषु प्रसिद्धम् । तत्र च पीठीभूते करणदेव्य इन्द्रियलक्षणाः शक्तयः स्फुरन्ति, आवाहनसंनिधापनादिव्यतिरेकेऽपि स्वयमेव स्फुटं प्रकाशन्ते, तासां

पं० ९ ग० पु० भूतपञ्चकोपलब्धत्वादिति पाठः ।

मध्ये च परमशिवो महाप्रमातृस्वभावः प्रस्फुरति, ततश्च

'सर्वाः शक्तीर्दर्शनस्पर्शनाद्याः
स्वे स्वे वेद्ये यौगपद्येन विश्वक् ।
क्षिप्त्वा मध्ये हाटकस्तम्भभूत-
स्तिष्ठन्विश्वाकार एकोऽवभाति ॥'

इति श्रीकक्ष्यास्तोत्रस्थितया स्वात्मरूपः परमेश्वर एव अन्तश्चक्रदेवताबाह्याभ्यन्तरभिन्नाः करणशक्तयश्च तदावरणदेवतास्थानीयाः, तदर्चनं च स्वशरीरात्मनि महापीठे एव उपपद्यते, तत्र यथा प्रतिमापुत्रिकादयो भावाः स्वात्मरूपभूतां मुख्यां देवतां प्रति प्रतिनिधिभावेन अध्यवसीयन्ते, तद्वत् स्वदेहस्यैव मुख्यतया पीठत्वम् । अनुकल्पोपकल्पनया तु स्थण्डिलमण्डलादीनामङ्गीकारः, इति तात्पर्यार्थः ॥ ३४ ॥

यश्च अलौकिकः परमेश्वरः स कीदृश्या प्रक्रियया उपास्य ? इत्याकांक्षायाम् सानुग्रहम् आह

सो तंथ सन्तणिंजो
विमरिसपुष्पाहिवाससुरहीति ।
चिन्तचसकाअपहिंज
सुहावीरपाणवंथूहि ॥ ३९ ॥

---

स तत्रार्चनीयो
विमर्शपुष्पाधिवाससुरभिभिः ।
चित्तचषकार्पितै-
र्वेद्यसुधावीरपानवस्तुभिः ॥३९॥

---

स वेदागमप्रसिद्धस्वभावः परमेश्वरः, तत्र पिण्डात्मनि पीठे पूजनीयः, पूजायां च वेद्यमयी या सुधा – सर्वेन्द्रियाह्लादकत्वादत्यन्तस्वीकार्या, या स्वभावत एकापि सती भयशोकहर्षाद्यवस्थावैचित्र्यात् अम्लतिक्तमधुरादिप्रायानेकरसविशेषोपश्लेषणी वीरस्य परभैरवस्य – वीरायाश्च स्वातन्त्र्यमय्याः तन्मध्यशक्तेः पीयते – स्वात्मसात्

क्रियते – इति व्युत्पत्त्या पानं सैव अङ्गत्वेन उपयुज्यते, स्वचित्तात्मकचषकोपग्रहणयुक्त्या कयाचित् अर्पणीयानि, चित्तस्य चषकता च तत्र बहुप्रवाहं सपर्यतां वेद्यवस्तूनां स्वान्तर्भैरवस्य एकहेलया ग्रहणसौकर्योपायत्वात्। विश्ववर्तिनो हि भावा बहिर्भिन्नप्रकारस्फुरणतत्तदिन्द्रियपरिस्पन्दोपगृह्यमाणस्वभावाः क्षणं विश्रम्य पश्चात् तत्तदिन्द्रियप्रणालिकया भैरवात्मनि अनुप्रविशन्ति – इति सुभगा इयं सरणिः। विमर्शोऽत्र परमेश्वरं प्रति स्वात्मतया विमर्शः प्रत्यभिज्ञानात्मा, स एव पुष्पं – पोषणकर्तृकत्वात् ॥३५॥

अथ अर्चारहस्ये एवमियता प्रपञ्चेन पूज्यदेवताचक्रस्वरूपं प्रतिपाद्य पूजामुपपादयितुमाह

णेअबलणिवालन अक
वरिवासा सा अ दुलहा लोये।
सुलहा अ वीसलणो
आसवतम्बुलगन्धपुंफाल ॥३६॥

निजबलनिभालनमेव
वरिवस्या सा च दुर्लभा लोके[22]।
सुलभानि च विश्वपते-
रासवताम्बूलगन्धपुष्पाणि ॥३६॥

स्वहृदयपरिस्फुरत्तारूपः परमेश्वर एव देवता इत्युक्तं वक्ष्यते च। तत्र यत् निजस्य स्वात्मनोऽतादात्म्यानुप्रविष्टं बलं – विश्वविक्षोभसहिष्णुत्वलक्षणं विम्रष्टृत्वं[23], तत्पर्यालोचनमेव वरिवस्या, अन्या पूजा तस्य अत्यन्तसुलभतया अध्यवसीयते – यतोऽयं विश्वपतिः ॥ ३६ ॥

२२ लोकः ज्ञातृज्ञेयस्वभावः, विश्वस्य सदाशिवादेः क्षित्यन्तस्य पतिः, आसवः वेद्यजातम्, तच्चमत्काररूपं ताम्बूलम्, पञ्च तन्मात्राणि गन्धः, गुणत्रयी पुष्पाणि।

२३ मालिनीविश्रान्तिरूपमध्यवसायलक्षणं विम्रष्टृत्वम्, तदुक्तं

'ध्यानादिभावं स्मृतिरेव लब्ध्वा
चिन्तामणिस्त्वद्विभवं व्यनक्ति।'

इति।

एवं सपर्यास्वभावं सामान्यतः परामृश्य तद्वि-

शेषानपि तथा योजयिष्यमाणः प्रथमं प्राणायामस्य परमार्थं प्रस्थापयति

विमरितं णिअसन्तं
विभवेकंजंमुहंमि थिमिएविं ।
बाहिरवुत्तांपाणं
भङ्गो पाण संज्जमे णोऊ ॥३७॥

---

विम्रष्टुं निजसत्त्वं[२४]
विभवे कार्योन्मुखे स्तिमितेऽपि ।
बाह्यवृत्तान्तानां
भङ्गः प्राणस्य संयमो ज्ञेयः
॥ ३७ ॥

---

२४ निजमात्मीयं चिद्रूपं सत्त्वं पर्यालोचनात्मकमानन्दस्वभावत्वम् ।

तदुक्तम्

'.........व्याप्तिस्तत्रानन्दो विराजते ।
यत्रानन्दो भवेद्भावे तत्र चित्सत्त्वयोः स्थितिः ॥'

इति । विम्रष्टुमावेशेन आदातुं, बाह्यवृत्तान्तानां सर्वेन्द्रियग्राह्याणां विष-

वेद्यतापहारोन्मुख्यशालिनि स्वसामर्थ्यरूपे विभवे, विश्वमयस्य कललावस्थानात्मकं स्तैमित्यमनुभवत्यपि, विश्वोत्तीर्णस्य स्वात्मपरिस्पन्दमयो विमर्शः – दर्पणमण्डलान्तःप्रविष्टगन्धगजेन्द्राद्यनुकृतिस्थानीयं पर्यालोचनं, तदुपपादकतया बहिर्भावानां वेद्योल्लासस्वलक्षणानां, सर्वेन्द्रियग्राह्याणां वृत्तान्तानां भङ्गः – भञ्जनं स्तम्भनं प्राणायामः, इत्युक्तं भवति ॥ ३७ ॥

याणां भङ्गस्तेभ्यो निवृत्तिः, स एव प्राणायाम इति, तदुक्तं श्रीभगवद्गीतास्वपि

'यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥'

इति ।

प्राणायामप्रसंगात् तदनन्तरोपकल्पितशोषणदाहनाप्लावानां तत्त्वमुत्तेजयति

सोसो मलसु णाणं
दाहो एअंस वासुणंहोल ।

अंबालनं आणं
णाणं सुहासेअणिमिआ सुधिः
॥ ३८ ॥

---

शोषो मलस्य नाशो
दाह एतस्य वासनोच्छेदः ।
आप्लावनं तनूनां
ज्ञानसुधासेकनिर्मिता शुद्धिः
॥ ३८ ॥

स्पष्टम् ॥ ३८ ॥

---

२५ बुद्ध्यहङ्कारमनोरूपाणवमायीयकार्मस्वभावमलत्रयस्य नाशः । वासना च शून्यावस्थारूपा तस्या दाहः तनुशुद्धिश्चैतत्सर्वं ज्ञानेनैव भवति, तदुक्तम् श्रीगीतासु

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।'

इति । यदा चोर्ध्वपक्षाश्रयणं क्रियते तदा चेत्थं बोध्यम्

'अनाश्रितः शून्यमाता बुद्धिमाता सदाशिवः ।
ईश्वरः प्राणमाता तु विद्या देहप्रमातृणी ॥'

इति ।

पुष्पादिस्वभावमुपन्यस्यति

अविअपदाए विमसां
विअणवग्गेस अङ्गसंणाहो ।
अघं व्येजविलासो
पुफालं सभावपोसअ भाव॥३९॥

अविकल्पतया विमर्शो
विकल्पवर्गस्याङ्गसन्नाहः ।
अर्घ्यं वेद्यविलासः
पुष्पाणि[२६] स्वभावपोषकाः भावाः
॥ ३९ ॥

२६ पुष्पाणि इच्छाशक्तिमयाः सोमभट्टारकांशरूपा नीलपीतादयः, त एव च परावस्थायां स्वभावपरिपोषका भवन्तीति । यदुक्तम्

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरूद्धा तत्रापि परमात्मनि सा स्थिता ॥'

इति तेषामेवाधराक······वात्मनि स्थिता सा वेद्यं तदेवार्घ्यं, तदुपरिवर्तिज्ञानक्रियामयो विकल्पवर्गः अङ्गन्यासः, तदेतदेव सूचितं – स तत्रार्चनीय इत्यत्र ।

करचरणाद्युपलक्षितस्य विकल्पविक्षोभप्रपञ्चस्य पूर्णाहंभावभावनास्वभावया कयाचित् अविकल्पतया विमर्शनमङ्गन्यासः, वेद्यस्य विकल्पप्रसरलक्षणस्य यो विलासः — संकोचावस्थायामपि स्वभावानतिक्रान्तो व्यवहारः तदेव अर्घ्यम्, स्वस्य यो भावः पूज्यदेवतास्वभावतया निरूपितचमत्कारः तस्य तादृक्परामर्शप्रतिष्ठापनलक्षणपोषणप्रयोजनानि पुष्पाणि — स्वभावं पोषयन्ति इति व्युत्पत्त्या पुष्पाणि इति तात्पर्यार्थः ॥ ३९ ॥

एवं लौकिकालौकिकसाधारण्येन उपात्तेषु द्रव्येषु सर्वेन्द्रियपक्षपातविषयद्रव्यविशेषं पृथक्कृत्य संस्कारयोगाभ्यां परीक्षितुमाह

पुण्याहन्ता मुहे
वंसविअपंकुराणा यंशोवम् ।

मन्तुलेहविशुद्धं
पुणां कुलबिन्दुतंपणं पणिमो
॥ ४० ॥

---

[27]पूर्णाहन्ताया मुखे
विश्वविकल्पाङ्कुराणां विक्षेपम् ।
मन्त्रोल्लेखविशुद्धं
पुण्यं कुलबिन्दुतर्पणं भणामः
॥ ४० ॥

कुलं हि नाम वेद्यवर्गोल्लासतया स्वस्वभावतया भगवान् अर्घ्यभट्टारक इत्याख्यायते, तत्र तदीया ये बिन्दवः—क्रमात्क्रममंशांशतया परिस्फु-

२७ पूर्णाहन्ताया अनुत्तरस्वातन्त्र्यरूपशुद्धविद्याया मुखे मन्त्राणामुल्लेखैश्चित्रैर्विशेषेण शुद्धमास्वादितं कृतम् अत एव लोकत्रयपावकम्, यदुक्तम्

'न तैर्विना भवेच्छब्दो नार्थो नापि चितेर्गतिः ।'

इति । कुलस्य परशक्त्यात्मकमहाकुलस्य यत् परमशिवात्मकं स्वरूपं तदेव बिन्दुस्तस्य तर्पणमिति ।

रन्तः शक्तिप्रसरस्पन्दाः तैः क्रियमाणं देवता-
तर्पणं भणामः – परामृशाम इति यावत्,........
................................ ॥ ४० ॥

........................................

...........लितत्त्वात् क्रमेण अर्च्यदेवताचक्ररह-
स्यम् उद्भावयितुम् आदौ उद्देशत उपन्यस्यति

सिरिपीढपंचवाअ
णेत्तुतंवीद्रचकीए ।
तंरह तंरह गुरुणं
पन्ती पंचअसत्ती अ सिंठिपमुहाल
॥ ४१ ॥

---

श्रीपीठपंचवाहो
नेत्रत्रयवृन्दचक्राणि ।
स्मरत स्मरत गुरूणां
पंक्तिं पंचशक्तीश्च सृष्टिप्रमुखाः
॥ ४१ ॥

पं० २ 'यावत्' इत्यतोऽनन्तरं सर्वेषु प्राचीननव्यपुस्तकेषु बह्वी त्रुटिर्वर्तते ।

श्रीपीठपंचवाहो नेत्रत्रयं वृन्दचक्रम् – इति यानि चक्राणि तानि स्मरत, परामृशत। श्रीगुरुनाथानां च पंक्तिं स्मरत, गुरुमण्डलद्योतनाय पुनरपि स्मरत इत्युक्तम्, सृष्टिप्रमुखाश्च पंचशक्तीश्च स्मरत याः सृष्टिस्थितिसंहारानाख्याभासेति भिद्यन्ते ॥ ४१ ॥

अथ श्रीचक्रं[२८] क्रमेण उन्मुद्रयिष्यन् आदौ पीठनिकेतनादिनेत्रत्रितयतां विभागद्वारा पर्यालोचयति

पीठे नव कलाः
 पञ्चैव पञ्चवाहपदव्याम् ।
सप्तदश भालनेत्रे
 द्वादश षोडश चान्यनेत्रयोः॥४२॥

---

२८ श्रीचक्रमिति, उक्तं च

'तच्छक्तिपञ्चकं सृष्ट्या लयेनाग्निचतुष्टयम् ।
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः ॥'

इति ।

सर्वेषु संगृहीतमूलादर्शपुस्तकेषु 'पीठे नव' इत्यस्य ४२ पद्यस्य मूलप्राकृतपद्यं न दृश्यते, तस्मात् संस्कृतछायापद्यमात्रमेवोपन्यस्तं ज्ञेयम् ।

पीठं हि नाम स्वशरीरभट्टारकम् इत्युक्तम्, यदुक्तं महानयप्रकाशे

'शिवशक्त्युभयोन्मेषसामरस्योद्भवं महत् ।
वीर्यं तस्मादिह एव महापीठं समुद्गतम् ॥'

इति । तत्र च कलाः शक्तयो नव, ताश्च पर्यालोच्यमानाः—प्रमात्रंशमयः कश्चित् आद्यस्पन्दः, तदनु तस्यैव उपरि प्रसरणौन्मुख्यरूपा शक्तिः काचित्, अथ तस्य प्रमाणस्फुरणरूपः कश्चिदिन्द्रियपरिस्पन्दः, ततश्च वस्तुव्यवस्थापनात्मिका तत्र स्फुरत्ता, पश्चात् प्रमेयोल्लासः; प्रमेयवर्गश्च सूक्ष्मेक्षिकया परीक्ष्यमाणो भूतपञ्चकमेव अन्तर्भवति, भूतानि च अत्र—आकाशो वायुस्तेज आपो भूमिरिति क्रमात् उत्पद्यन्ते । तत्र च प्रारम्भ एव स्वात्मनश्चिद्रूपतापरामर्शः, तदनु तस्य स्थैर्योपपादनम्, तदनु तद्योगरूपस्य स्पन्दानुवृत्तिः, तदनु तस्यैव उज्ज्वलीकरणं, ततश्च स्वविश्रान्तिलक्षणमाप्यायकत्वं च—इति क्रम-

पं० १५ ख० पु० तदनु उद्योगेति, ग० पु० तद्योग्येति पाठः ।

विवक्षा। एवं च प्रमाता प्रमाणं पञ्चविधं प्रमेयं पीठनिकेतनम् इत्यर्थो भवति। अन्ये पुनरेतत्पीठक्षेत्रश्मशानक्षेत्रेशमेलापयजनभेदात् पञ्चप्रकारतया उपासते, पञ्चैव पञ्चवाहपदव्यां वाहाः परमेश्वरस्य स्फुरणधाराः, ताश्च पञ्च,—व्योमवामेश्वरी[२९] खेचरी दिक्चरी गोचरी भूचरीति भवन्ति। तत्र व्योम्नाम् ओंमात्मकप्रणवरूपताविमर्शवैशि-

२९ ········पर्यालोचनात्मकं शाक्तं पर्व तत्प्राप्तिं प्रति ईश्वरी सामर्थ्यशालिनीति व्योमव्योमेश्वरी स्वातन्त्र्यापरपर्याया मायाशक्तिरिति उच्यते। तदुक्तम्

'प्रलीने शब्दौघे तदनु विरते विन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिवपुरुपाधिन्युपरते।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम्॥'

इति। तथा

'स्वातन्त्र्यापरपर्यायमायाजाड्यविलोपनात्।
विलीय चिद्रसीभूतं विश्वानन्दमुपास्महे॥'

इति। सैव च परिणामिनी पुरुषस्य भोक्तृत्वमापादयन्ती तद्भोगार्थमेव प्रकृतिरिति उच्यते, न तु प्रकृतेर्निजं प्रयोजनमस्तीति। तदुक्तं पातञ्जले

'तदर्थ एव दृश्यस्यात्मा'

दृश्यस्य प्रकृतेस्तदर्थं पुरुषभोगार्थमेवेति।

ष्ट्यानुप्राणनानां वक्ष्यमाणपञ्चपर्वकाणां वामधामानं प्रति ईश्वरी सामर्थ्यशालिनीति व्योमवामेश्वरी, सा च – परमेश्वरस्य अविकल्प्यभूम्यनुप्रविष्टा चिच्छक्तिश्च बोधरूपे प्रमातरि स्फुरन्ती, तदनु तदन्तःकरणानुप्रविष्टा पश्चात् तस्यैव बाह्येन्द्रियानुबन्धिनी भूत्वा बहिर्वेद्यलक्षणं विषयोल्लासम् अखिलम् उपयुङ्क्ते इति, खे चरणात् खेचरी, दिक्षु अन्तःकरणेषु चरति इति दिक्चरी, गोषु बहिरिन्द्रियेषु संचरणात् गोचरी, भूमिरूपविषयौचित्याचरणात् भूचरीति। अथैवं पञ्चधा वहतः परमेश्वरस्य प्रमातृप्रमाणप्रमेयतया त्रैविध्येनाऽपि प्रकारं सूचयन् मूर्तिचक्रं तावदाह ‘सप्तदश भालनेत्र’ इति, – भालो ललाटः तद्गतनेत्रे सप्तदशशक्तयः, तच्च ‘मूर्तिचक्रम्’ इत्याम्नायते – मूर्छनात् मोहनरूपात् समुच्छ्रयणरूपाद्वा मूर्तिचक्रं,[३०]

३० मूर्तिचक्रमिति भोग्यरूपायाः प्रकृतेर्भोक्तृरूप आत्मेति उच्यते, । अस्यैव च प्रमाता आत्मा भोक्ता शिव इति पर्यायाः । तदुक्तम्

‘प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवलयन् ।

तच्च अन्तर्बहिरहन्तेदन्ताद्वितयस्फुरणानुगुण्यात् । तत्र यदा अहन्तायाः समुच्छ्रायः तदा इदन्ताया न्यग्भावरूपो मोहो भवति, यदा पुनरिदन्तायाः समुच्छ्रायः तदा अहन्ताया उक्तरूपो मोह, इति – द्वयमपि एकार्थमेव, रूपं च प्रमातृवह्निरूपस्य परमप्रकाशस्य परभैरवसंविदैक्यपर्यन्तोत्कर्षः पाषाणादिजडसंवित्पर्यन्तो न्यूनीभावश्च इति – महती स्वातन्त्र्यशक्तिर्मूर्तिशब्देन उच्यते । तत्र

---

प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुः शिवमकुलमम्ब प्रविशति ॥ '

इति, वामधामेति मूर्तिचक्रेत्यनेन 'यस्योन्मेषनिमेषाभ्याम्' इति सूत्रे यस्येति उन्मेषनिमेषेति पदद्वयं निर्वाहितम्, त्रिकार्थाभिप्रायेण तु एतत् नरशिवात्मकं रूपद्वयं, शक्त्यात्मकं तु रूपं प्रकृतेरेवापरिणामित्वे चित्तात्मकं तृतीयं शक्तिरूपं भवतीति । तदुक्तम्

'परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे ।
प्रतिरुचि रुचिरे कुड्ये चित्तमये निविशते महाबिन्दुः ॥ '

इति । अनेन च शक्तेरेव जगत्प्रादुर्भावात् जगत इत्येतन्निर्वाहितमिति । तदुक्तमभिनवगुप्तपादैः

'भैरवरूपस्य विश्वस्य नररूपापरभट्टारिकास्वभावः शाक्तस्तत्सहितस्यात्मनः शिवात्मकं तृतीयं ब्रह्म हृदयम्'

इत्यनुत्तरविचारे । शाक्तमेव च रूपं वृन्दचक्ररूपम् ।

कलाः सप्तदश अग्नेर्बाह्याभ्यन्तरकलनेन 'कला-दशकं, शिखासप्तकं' च इत्याम्नायेषु प्रसिद्धं तत्संख्यया मूर्तिचक्रशक्तयस्तावत्य इति। ताश्च पर्यालोच्यमानाः चैतन्यं प्राधान्यम् अभिमानकर्तृत्वम् अध्यवसायो वचनम् आदानम् गमनम् उत्सर्जनम् आनन्दत्वं ज्ञानं निश्चयः संकल्पनं श्रवणं स्पर्शनं दर्शनम् आस्वादनम् आघ्राणनं च इति प्रमातृस्फुरणप्रकारा एव भवन्ति, तेषाम् अन्तःकरणबहिष्करणादीनि उपायतया अवतिष्ठन्ते, एतास्तु मूर्तिशक्तयः संकुचितस्य प्रमातुः तत्तद्विषयसाधनभेदोपश्लेषात् पशुत्वम् उपजनयन्ति, असंकुचितस्य स्वस्वातन्त्र्यशक्तिविजृम्भसंरम्भकतया प्रवर्तमानाः परमशिवीभावलक्षणं माङ्गल्यम् उन्मीलयन्ति इति। अथ प्रकाशानन्दचक्रद्वितयमाह 'द्वादशषोडश चान्यनेत्रयोरिति' अन्ययोः दक्षिणवामरूपयोः नेत्रयोर्यथासंख्यं द्वादश – षोडश शक्तय इत्यर्थः। तत्र च दक्षिणं नेत्रं प्रकाशचक्रं – प्रकाश्यते अनेन प्रमेयतत्त्वम् इति

व्युत्पत्त्या प्रकाशः प्रमाणम् इत्यर्थो भवति। तत्र च शक्तयो द्वादश, ताश्च तत्त्वदृष्ट्या यथाक्रमं प्राणप्रधानानि[३१] वाक्पाणिपादपायूपस्थरूपाणि 'कर्मेन्द्रियाणि' मनःश्रेष्ठानि श्रोत्रत्वक्चक्षूरसनाघ्राणात्मकानि 'ज्ञानेन्द्रियाणि'। वामनेत्रमानन्दचक्रम्—आनन्दो नाम स्वात्मपरमेश्वर इदन्तया स्फुरन् समन्तात् समृद्धिस्वभावः प्रमेयवर्गोल्लासः, स च सोमांशः, तत्र च कलाः षोडश वस्तुवृत्त्या, ताः षोडशविकारस्वभावाः, विकाराश्च कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकम् आकाशादिभूतपञ्चकम् मनश्च ॥ ४२ ॥

एवं स्थूलदेहे पीठतया उपास्यतामुपपाद्य सूक्ष्ममप्येवं विमृष्टव्यमित्येवमुन्मीलयितुं वृन्दचक्रं पर्यालोचयति

**आपडिअं पञ्चसन्धे**
**वोसोटीतिंदं किमि।**

३१ प्राणप्रधानानीति प्राणमनःप्राधान्यमत्र सदाशिवेश्वरवदेव पूर्वोक्तप्रकारेण बोध्यमिति।

ण खलु मण्डले गुरुणां
णिअमो णिअआइलं घि मां मुत्तो
॥ ४३ ॥

---

प्रकटितपञ्चस्कन्धं
चतुष्षाष्टिर्भवति वृन्दचक्रम् ।
न खलु मण्डले गुरूणां
नियमो नियमानलं विना युक्तः
॥ ४३ ॥

वृन्दचक्रं वृन्दसंदोहात्मा, तादृक्त्वं च तस्य स्वतः पुर्यष्टकमयतया ज्ञानसिद्ध्यादिपञ्चकसमष्टिस्वभावत्वाच्च, प्रकटितपञ्चस्कन्धज्ञानसिद्धाः षो[३२]डश, मन्त्रसिद्धाश्चतुर्विंशतिः, मेलापकसिद्धा द्वा-

---

३२ षोडश स्वरा ज्ञानसिद्धरूपाः। कादिभान्ताश्चतुर्विंशतिर्मन्त्रसिद्धाः स्वरहीनेन मकारेण शिरसि मिलिताः। मेलापसिद्धा द्वादश,– यथा 'व्यञ्जनमस्वरं परं वर्णं नयेत्' १ 'समानः सवर्णे दीर्घीभवति परश्च लोपम्' २ 'यवर्णौ यमसवर्णे न च परलोप' इत्याद्येवं रूपः ३ 'ओदन्ता अ इ उ आ निपाताः स्वरे प्रकृत्या' इत्याद्येवंरूपः ४ 'क का कि की'

दश, शाक्तसिद्धा अष्टौ, शांभवसिद्धाश्चत्वारः—इति भङ्ग्या चतुष्षष्टिर्वृन्दचक्रम् । अयं भावः—परमेश्वरो हि प्रकाशः प्रकृत्या प्रसन्नगम्भीरमनुत्तरतरङ्गमम्बुराशिमनुकुर्वन् अविकल्पात्मैव अन्तः स्वातन्त्र्यमयीमानन्दशक्तिमनुभवति, तस्य च तादृक्स्वभावानुप्रविष्टाः शक्तयः शाम्भव्यः, स एव यदा किंचित्कल्लोलनक्रियौन्मुख्यम् अवलम्बते तदा शाक्तोल्लासः, तस्यैव किंचिल्लोलीभावे मेलापपरिस्फुरणम्, उपर्युद्रिक्तकल्लोलकल्पनायां

---

इत्यादि द्वादशमात्रायोजनरूपः ५ 'क्क क्क क्क क्म' इत्येवंरूपः ६ तथा स्वराणां व्यञ्जनानां चास्वराकारेणान्तर्व्यापकरूपमेलापः ७ 'यवर्णोऽयमसवर्णे' इत्यनेन संपन्नानां चतुर्णां 'सपरस्वरायाः संप्रसारणम्' इत्यादिना इ उ ऋ ऌ रूपेण पुनः परिणामः ८ आद्यकलाचतुष्कस्य निरावरणीभावः ९ द्वादशमरीचीनां युगपत् त्रयोदशे प्रवेशलक्षणः संहारः १० एषामेव निजविषयान् प्रति मेलापः ११ इति त्रितयात्मकः संविन्मेलापः । शक्तेरनलपवनवलनया मध्यमार्गोदिताया मायाख्यपाशवब्रह्मविष्णुरुद्रेश्वरसदाशिव-इन्धिकादीपिकाबैन्दवनादाख्यशक्तिरूपग्रन्थिद्वादशकेन सह स्पर्शभेदसंख्यातेन धाममेलापो द्वादशः १२ । एष च त्रिविधसंविद्रूपाष्टविधवर्णरूपैकविधधामसंख्यातो द्वादशविध उन्मनारूपसमवायात्मा मेलापः १३ यादि-हान्ता अष्टौ शाक्तसिद्धाः । आद्यक्षरचतुष्कलारूपाः क्षकारचतुष्कलारूपा अष्टौ शांभवसिद्धाः ।

मात्रोन्मेषः, चन्द्रोदयादब्धेरिव कुत्रचित्प्रवृद्धिहेतूल्लङ्घनादिरुत्कटक्षोभको ज्ञानसिद्धोदयः, ततश्च ज्ञानसिद्धाः प्रमेयांशात्मकतया शाक्तसिद्धाः, तदवच्छेदव्यपोहनया शुद्धप्रमातृतामापन्नाः शाम्भवसिद्धाः, स्वपूर्णसंवित्स्वातन्त्र्यमयपरमशिवभट्टारकतयेति । तथा च श्रीचक्रक्रमसद्भावे[33]

'ज्ञानं सृष्टिं विजानीयात्स्थितिर्मन्त्रः प्रकीर्तितः ।
संहारं च महाशाक्तं.............................. ॥'
..................................................
..................................................

[ इतोऽनन्तरं सर्वेष्वादर्शपुस्तकेषु त्रुटिर्वर्तते, या वर्तमानपद्यस्य भागात्मा, अग्रिमपद्यानां च पूर्णतया टीका अस्तीत्यनुमीयते ]

सृष्टौ तु दश कलाः
स्थितौ तु द्वात्रिंशद्भवन्ति शक्तयः।
एकादश संहारे
त्रयोदश तास्तुरीयपर्वाणि ॥४४॥

---

३३ अत्रैव च पञ्च शक्तीः सृष्टिप्रमुखा इत्यस्यान्त...............स्तदेव द्योतयितुमुक्तं तथा च श्रीचक्रेति

भासायां न विकल्पाः
स्फुरन्ति स्फुरदेकनिष्कलश्रियाम्।
यदि प्रतिबिम्बगत्या
स्फुरति परं षोडशाधिका देवी
॥ ४५ ॥

---

सृष्टेः पञ्चकलाभासे
जनो गणयति व्यवधानम्।
सृष्टेर्मूलस्कन्धे
भासायां पल्लवः सृष्टिः ॥ ४६ ॥

---

[ सृष्टावित्यादि इदं पद्यत्रयं पुस्तकान्तरेष्वविद्यमानं केवलमेकस्मिन्नेव संदृश्यमानतया पश्चात् प्रक्षिप्तं प्रतिभाति । ]

चित्तं ण रिहलि चित्तं
चित्तअरो पसलिरिहलि तचित्तं।
ताहि भणह कत्थ जोगो
कालं दोणंवि देवधावधा ॥ ४७ ॥

---

चित्रं न लिखति चित्रं
चित्रकरः पश्यति लिखति तच्चित्रम्।
तद्भणत कुत्र योग्या
कर्तुं द्वयोरिति देवताबुद्धिः॥४७॥

---

जडमजडं वा वस्तु 'देवता' इति संदिहानो जन एवं प्रतिबोध्यः, यदुत आलेख्यार्पितवपुषं पुरुषमचेतनं प्रति तज्जातीयस्य अन्यस्य कस्यचिदपि तादृग्विलेखनक्रियायां सामर्थ्यं नालोक्यते प्रत्युत तद्विजातीयस्य तच्छिलानिर्माणे रूपकौशलोत्कर्षशालिनः चेतनस्यैव तत्संभवति—इत्यापतितम्। उक्तमर्थं हृदयंगमीकर्तुं 'पश्यति' इत्युक्तम्, चेतनाचेतनयोः सामर्थ्यमसामर्थ्यं च प्रख्यापयितुं पुनः पुनश्चित्रशब्दप्रयोगः। तदिति यतोऽन्वयव्यतिरेकाभ्यां चेतनस्यैवोक्तक्रियाकर्तृत्वम् न पुनस्तद्व्यतिरिक्तस्य कस्यचित्ततो हेतोर्भणत परामृशत—तयोश्चित्रस्य चित्रकरस्य चो-

भयोर्मध्ये कस्य देवताबुद्धिः कर्तुमुचिता, इति ॥ ४४–४५–४६–४७ ॥

ननु 'स्वात्मैव देवता' इति निर्बन्धः तत्किमस्य मन्त्रतन्त्रादिना प्रपञ्चेनोपक्रियते, स खलु स्वव्यतिरिक्तदेवाभिमुखप्रयोजनतया स्वीक्रियते? इत्याशंक्य – मन्त्रस्तावदुक्तरूपदेवतानुगुण्येन निर्णीयते, इत्याह

मणणमणी णियविभवे
णियसंकोचभअंमि त्रानई ।
कवलीयअविस्त्रविअपा
क्षणभुवि कावि मन्तसन्दथो
॥ ४८ ॥

---

मननमयी निजविभवे
निजसंकोचभये त्राणमयी ।

कवलितविश्वविकल्पा
अनुभूतिः कापि मन्त्रशब्दार्थः
॥ ४८ ॥

'मननत्राणधर्माणो मन्त्रा' इति ह्याम्नायः, तत्र मन्त्रानुसंधातुः स्वेच्छामात्रेणोपाधिना 'विभवः, संकोच' इति उपाधिद्वयमस्ति, तयोर्विभवो नाम विश्वतदुत्तरोभयसामरस्ययुक्त्या अहंभावभावनात्मा विकासः—यत्पारमैश्वर्यमुच्यते, संकोचश्च तद्विपर्ययादपूर्णत्वाभिमननं तत् 'पाशवम्' इत्याख्यायते। एवं स्थिते तादृगात्मनि विकासे समुल्लसति तस्य च यन्मननम्—उपर्युपरि यथापरामर्शानुस्यूतिस्वभावश्चमत्कारः, तत्प्रकृतं यस्याः, तद्वदुक्तरूपे संकोचे प्रस्तुते त्राणं 'संकोचोऽपि विचार्यमाणश्चिदात्मैक्येन प्रथमानत्वाच्चिन्मय एव अन्यथा तु न किंचित्' इति श्रीप्रत्यभिज्ञाहृदयमर्यादया तस्यापि संकोचस्य वैश्वात्म्यप्रथानुप्रविष्टतानुसंधानोत्पादनद्वारा स्वस्वभा-

वभङ्गप्रसंगरूपचाकित्यव्यपोहनलक्षणं रक्षणं तन्मयी, हेतुद्वयेन वेद्यविक्षोभसर्वग्रासविशृङ्खलोल्लासायानुभूतिः स्वहृदयैकसंवेद्या विमर्शशक्तिः, सैव मन्त्रः। यथा च श्रीराजभट्टारके

'वर्णात्मको न मन्त्रो
दशभुजदेहो न पञ्चवदनोऽपि।
संकल्पपूर्वकोटौ
नादोल्लासो भवेन्मन्त्रः॥'

इति॥ ४८॥

ननु मंत्राणामेव अलौकिकानुभूत्यात्मकत्वं प्रसाधनम् – एतत्सर्वं निर्विवादं, श्रोत्रेन्द्रियग्राह्यस्य शब्दराशेः कीदृशम्? इत्याशंक्य, वाक्तत्त्वस्यैव तत्त्वमुन्मुद्रयितुमाह

वेहरिआ णाम किआ
णाणमई होल मलमा वाआ।
इच्छा उण पंखन्ती
सक्षमं समरशा वत्ती॥ ४९॥

वैखरी नाम क्रिया
ज्ञानमयी भवति मध्यमा वाक् ।
इच्छा पुनः पश्यन्ती
सूक्ष्मा समरसा वृत्तिः ॥ ४९ ॥

वाक्तत्त्वं तावत्क्रमात् – सूक्ष्मा पश्यन्ती मध्यमा वैखरी, इति चतुर्धा भिद्यते । तत्र वैखरीति ताल्वादिकरणव्यापारे प्रसिद्धा, या – क्रियाशक्तिरित्यध्यवसीयते, मध्यमा च बुद्धिवृत्तिमात्रं प्रवर्त्यमानत्वात् ज्ञानशक्तिः, पश्यन्ती पुनरिच्छाशक्तिः – बहिःप्रसरणाभ्युपगमरूपत्वात्तस्याः, यतः पश्यन्तीति व्युत्पत्तिः, सूक्ष्मा तु शिखण्डचण्डरसन्यायात् उक्तवाक्त्रयशबली[कृत]स्वभावा प्रत्यग्दृशः परमेश्वरस्योद्योगलक्षणा वृत्तिराख्यायते, परा वाक् पुनः तस्यैव परमेश्वरस्य स्वरूपमनुप्रविशन्ती परिस्फुरति ॥ ४९ ॥

अथ मन्त्रसाहचर्यान्मुद्राप्यलौकिकी काचिद-नुसंधेया, इत्याह

आनन्दुल्लासिस्त्री
फुल्लंइअंमहसिथिसोहग्गा ।
दीसइ जंथ दसाए
सौश्चि अ देवंस मंवमुदामी
॥ ५० ॥

---

आनन्दोल्लासश्रीः
क्षुल्लंकिताष्टमहासिद्धिसौभाग्या।
दृश्यते यत्र दशायां
सैव च देवस्य महामुद्रा ॥५०॥

यस्यामवस्थायां देवस्य—क्रीडाविजिगीषाद्य-नेकप्रकारस्वातन्त्र्यसारत्वात् पूज्यपूजकत्वोभयस्व-भावसामरस्यशालिनः परमेश्वरस्य, स्वविश्रान्ति-लक्षणं आनन्दं प्रति य उल्लासः, तथा परामृश्य-

तया स्फुरत्ता, तस्याः श्रीः – तदुपर्युपरि अनुस्यूतिलक्षणा प्ररूढिः, दृश्यते – अपरोक्षीक्रियते, सैव सर्वाः करङ्किण्यादयः प्रसिद्धास्तास्ता मुद्रा – इत्यवगन्तव्यम् । क्षुल्लकितेति, अणिमादीनां सिद्धीनां साधकजनहारित्वोत्कर्षलक्षणं यत्सौभाग्यं तदुपपादितया आनन्दसंपदा क्षुल्लकीक्रियते इत्यक्षरार्थः । अयं भावः – करचरणाद्यवयवकुञ्चनादिसंकोचोल्लङ्घनेन निस्तरङ्गसमुद्रावस्थास्थानीया अन्तर्लीनबुद्बुदबिन्द्वादिकल्पाशेषबाह्यानन्दपरिस्पन्दा स्वविश्रान्तिचमत्कारापरपर्यायपरामर्शक्रियारूपा काचिदलौकिकानुभूतिर्मुदं रातीति व्युत्पत्त्या [३४]करङ्किण्याद्यन्यमुद्राप्रपञ्चोदयविलयभूमिर्मुद्रात्वेनानुसंधेया, इति ॥ ५० ॥

---

३४ खेचरी लेलिहाना भैरवी क्रोधनी करङ्किणी इति शांभवसिद्धादिपञ्च मुद्राः, तत्र खेचरीमुद्रालक्षणम्

'अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
एषासौ शांभवी मुद्रा सर्वतन्त्रेषु गोपिता ।।'

इति ।

इत्थं महता प्रपञ्चेनोपपादितस्य विमर्शस्वरूपस्य प्रयोजनमुपपादयितुमाह

हिअठोणपरूढो
विमर्सकम्पडमो महासाहे ।
पुंपइ भोअसिरी
पल्लवइ अ णिंकव सुकसु ालोअ
॥ ६१ ॥

---

हृदयस्थानप्ररूढो
विमर्शकल्पद्रुमो महाशाखः ।
पुष्प्यति भोगश्रियं
फलति च निष्कलं सुखोत्सवालोकम् ॥ ६१ ॥

हृदयं हि नाम विश्वप्रतिष्ठाभूमित्वादतिमहत्स्थानम्, यदुक्तं आचार्याभिनवगुप्तपादैः

पं० १ ग० पु० स्वभावस्येति पाठः ।
पं० ९ ख० पु० पुंसां भोगश्रिया इति पाठः ।

'हृदयं हि नाम विश्वप्रतिष्ठास्थानमित्युच्यते'

तत्र प्रकर्षेण रूढः – चर्व्यमाणतामापन्नो, विमर्शः – बाह्याभ्यन्तरपथसहस्रसर्वस्वनिर्वाहकतया तत्तदभिलषितपदार्थदानपाण्डित्यशालिकल्पशाखी इत्यध्यवसीयमानो विमर्शलक्षणः स्वात्मपरामर्शात्मा चमत्कारः, स्वस्वरूपवेदिनां पुंसां, पुष्यति भोगश्रियं – पुष्पस्थानीयां भोगलक्ष्मीमुद्भावयति इति, भोगोऽप्यभिमतोऽङ्गनालिङ्गनादिर्बहिर्भूत्यनुभवः, तस्येयमेव श्रीः, यद्विधिनिषेधोल्लङ्घिना संविदद्वैतास्वादसौभाग्येन ग्राह्यग्रहणकौतूहलोपलम्भ एव स्वात्मविजृम्भाभाववेधसाधनप्रगल्भः संपत्स्वभावत्वेन अनुभूयते। किं च विमर्शाख्यः कल्पशाखी निष्कलमहन्तेदन्ताविभागविच्छेदावच्छेदलक्षणकलाकलङ्कशून्यं यत्सुखं – स्वविश्रान्तिस्वभावः स्वहृदयाह्लादः, स एवोत्सवः

अहंता
&
इदंता

पं० ११ क० पु० विजृम्भाभावे बेधेति पाठः।

'शचीकुचतटे शक्रो नरके विलुठन्क्रिमिः
उभौ समसमाधानौ विचित्रो भावनाभ्रमः ॥'

इत्याद्यनुभवितृजनविशेषहृदयसंकल्पमात्रोपकल्पितसौख्यारोपणतद्व्युदासेन बहुभिः श्रीशिवानन्द-महाप्रकाश-महेश्वरानन्दप्रभृतिभिः योगीन्द्रैः संभूय संवादेनोपभुज्यमानत्वात् तादृगुत्सवरूपमालोकं प्रत्यक्प्रकाशं च प्रसूते ॥ ५१ ॥

ननु जीवन्मुक्तिलक्षणं माहेश्वर्यं खल्वस्य फलतया प्रतिपादितं, तत्तु न संभवति यतो – देहाद्यवच्छेदव्यतिरिक्त एव काले पुंसामपवर्गोत्पत्तिः – इत्यन्येषामाग्रहः? इत्याशंक्याह

किमिओ होइ ण देवो
तंस कहं कालकंमसंपंसो ।
णिश्चाणिरायइणंस वि
कोवि जीवमसोक्खपेफेहो ॥५२॥

---

पं० ६ ख० पु० तादृगालोकं प्रत्यक्प्रकाशं च प्रसूते इत्येतादृशः पाठः।
पं० ८ ख० पु० लक्षणमाहेश्वर्यमिति पाठः ।

क्रमिको भवति न देव-
स्तस्य कथं कालकल्मषस्पर्शः
नित्य[35]निरावरणस्यापि
कोऽपि जीवन्मुक्तिप्रत्यूहः
॥ ९२ ॥

देवो हि नाम देशकालादिविश्वविलासं प्रति स्वस्वभावसंविद्दर्पणोपकल्पतया द्योतनाद्यनेकार्थोपपादनवैशारद्याद्विश्वात्मकः परमेश्वर इत्यवधार्यते, अतश्चायं क्रमिको न भवति – पौर्वापर्यादिविकल्पनामयेन क्रमेण नाक्रम्यते, वैश्वात्म्यैक्यविजृम्भणसंरम्भोत्तरे भगवति

३५ नित्यनिरावरणस्यापीति । यदुक्तम्

'यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।
तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित् ॥' (स्प० २)

इति । तथा

'अक्रमता मे क्रमिकं ज्ञात्राद्यं सक्रमाक्रमा तु चितिः ।'

इति च ।

पं० ६ क० पु० उपकल्पितया इति, ख० पु० उपकल्पनया इति पाठः।

'चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः ।'

इति-स्थित्या कस्य कस्मात्पृथक्त्वम्, तद्धेतुकः क्रमश्च – इति युक्तिपर्यालोचनायां मूकीभाव एवोत्तरं प्रत्यर्थिनो जनस्य, अस्य कालाख्येन कलङ्केन संपर्कः केनचिदपि प्रकारेण न संभवति – कालस्य क्रमतयैव पर्यवसानात्, एवं 'नित्यनिरावरणस्य' इत्यादि । एतदुक्तं भवति

'चिदानन्दलाभे देहादिषु चेत्यमानेष्वपि
चिदैकात्म्यदार्ढ्यं जीवन्मुक्तिः ।' (सू० १६)

इति श्रीप्रत्यभिज्ञाहृदयमर्यादया भोगमोक्षसाक्षात्कारलक्षणो जीवन्मोक्षः

'सर्वो ममायं विभवः,

इति स्ववैश्वात्म्यानुसंधानसंधुक्षितैश्वर्याणां प्रमातॄणां स्वभाव एव, न त्वाहार्यः कश्चिदतिशयः
॥ ५२ ॥

ननु जीवन्मुक्तिर्नामात्मनो जननमरणाद्यनुस्यूतस्य सर्वावस्थानिर्विशेषस्वानन्दोत्सवानुभूति-

सामरस्यं, स्थैर्याभावपक्षे कथं संगच्छेत? इत्याशंक्य, क्षणभङ्गमेव वक्तुमाह

---

यक्किबि जेण केण वि
रूपेण जहिं कहिं वि किं णंथ ।
तां अंपा णिवि
अंविरो खणभङ्गो च्छेअ अंविरो होत
॥ ८३ ॥

---

यत्किमपि येन केनापि
रूपेण यत्र कुत्रापि किं नास्ति ।
तस्मादात्मा नित्यः
स्थिरः क्षणभङ्ग एव स्थिरो भवति
॥ ८३ ॥

---

३५ अत्र चायमाशयः – व्यवहारकाले क्रियाशक्तियोगलक्षणसर्वाकारनिराकारस्वभावस्यात्मनः नानाजातिव्यक्तयः प्रादुर्भवन्ति, तत्रैवं स्थिते सति कस्मिंश्चित्सामान्ये कस्यांचित् व्यक्तौ च ध्वंसोन्मुखायां संपन्नायामपि तदात्मकत्वेन क्षणभङ्गुरत्वेऽभ्युपगतेऽपि अपरसामान्यव्यक्तयः स्थिता एवेति नित्यत्वस्थिरत्वेऽपि अभ्युपगते आत्मनि – इति व्यवहारकालविषयमेव नित्यत्वानित्यत्वं न परमार्थसत्ताविषयमिति ।

15

अत्रायमाशयः—यत्किमपि कामं भावरूपमभावरूपं वा वस्तु, यस्मिन्कस्मिंश्चिद्वर्तमाने भविष्यदादौ वा काले, तथा पुरो-वर्तिनि अनासन्ने वा देशे, येन केनापि सभागात्मना विभागस्वभावेन वा वपुषा, विद्यते वा न वा इति? न विद्यते इति तावन्न शक्येत वक्तुं—शून्यत्वप्रसङ्गात्, प्रपञ्चस्य शून्यत्वपक्षश्च पूर्वमेवाधिक्षिप्तः; तत्र यत्किंचिद्वस्तु विद्यते एव—इति वक्तव्यम्, तदा च सत्स्वभावतया 'अयमात्मा परिस्फुरति' इति कथमस्य स्थैर्यमुच्छिद्येत, आत्मनो विश्वाकारत्वाङ्गीकारे विश्ववर्तिनां क्षणभङ्गाभ्युपगमेऽपियोऽयं क्षणभङ्गो नाम कश्चिदर्थः तस्य तावदनपह्नव एव, इति—तावन्मात्रेणापि तन्मयस्याप्यात्मनः स्थैर्यमव्याकुलम् किमुत विश्वस्यैव स्थैर्ये समर्थ्यमाने इति, अनुभवविकल्पस्मरणलक्षणानेकसंघट्टानुसंधानसाध्या हि लोकयात्रा—स्तम्भं पश्य कुम्भमानय इत्यादौ तत्तच्छब्दार्थसंकेतानु-

पं १७ ख० पु० संकेतानुभूत्यनुस्मरणेति पाठः।

स्मरणादेरवश्यंभावात्। संविदां च तासामन्योन्यानुसंधानसामर्थ्यं[36] न संभवति—स्वयं प्रकाशत्वात्, तथा—भावे चान्यपरामर्शानौचित्यात्, तदन्यवार्तानभिज्ञानामासामनुसंधानक्षमः कश्चित्स्थैर्यशाली विद्यते—इत्यनिवार्येयं मर्यादा।

'नित्यश्चात्मावगन्तव्यः कालक्रमविवर्जनात्।
सर्वलोकप्रसिद्धेयं तत्रयुक्तिरुदीर्यते॥
प्रसवानन्तरं बालो जनन्याः स्तनमापिबन्।
स्तनाद्यर्थक्रियां चैव स्मर्ता चेति विकल्प्यते॥
स्मृतिश्चानुभवायत्ता सा च नात्रास्ति जन्मनि।
ततः प्राचीनया भाव्यमनुभूत्या कयाचन॥
सामानाधिकरण्यं च प्रायो विद्वद्भिरिष्यते।
अत आत्मा सदा स्थैर्यान्नित्योऽसाविति बुध्यताम्॥'

इत्याद्युक्तनयेन॥ ५३॥

---

३६ अन्योन्यानुसंधानेति, तदुक्तम् श्रीप्रत्यभिज्ञायाम्

'एवमन्योन्यभिन्नानामपरस्परवेदिनाम्।
ज्ञानानामनुसंधानजन्मा नश्येज्जनस्थितिः॥
न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान्॥'

इति।

नन्वस्तु जीवन्मुक्तिरूपः पुरुषार्थः स्थैर्यवत एवात्मनः, तस्य च पुनरानन्दस्वभावत्वं विप्रतिपन्नम् – पाषाणप्रायतया मुक्त्यवस्थायाः कैश्चिदङ्गीकृतत्वात् ? इत्याशंक्याह

---

णणो अंपणो पियंथं
सव्वंस पिअंउ णं भणाई सई ।
ता आनन्दसहाऊ
अंपा मुत्तो अमुत्तो वा ॥ ६४ ॥

---

नन्वात्मनः प्रियार्थं
सर्वस्य प्रियत्वं भणति श्रुतिः ।
तस्मादानन्दस्वभाव[३७]
आत्मा मुक्त अमुक्तो वा ॥ ६४ ॥

नन्वात्मन इति

---

३७ आनन्दस्वभाव इति । यदुक्तम्

'सुगिरा चित्तहारिण्या पश्यन्त्या दृश्यमानया ।
जयत्युल्लासितानन्दमहिमा परमेश्वरः ॥'

इति । तथा

'आत्मनः प्रियाय सर्वं प्रियं भवति'

इति श्रुतिः, सा परमेश्वरे परामृश्यतया प्रवृत्ता, नन्विति पराभ्युपगमार्थः

'सुहृदयस्फुरणलक्षणस्य आत्मनः
पूर्णत्वादहमित्येतज्ज्ञानमानन्द उच्यते'

इति स्थित्या पूर्णाहन्तानुसंधानात्मकस्वविश्रान्तिसतत्त्वो य आनन्द स एव असाधारणं रूपं, तादृक्स्वभावत्वे च तस्य मुक्तत्वममुक्तत्वमित्यवस्थाद्वयमपि न किंचित् भयम्, यदि च तस्य आत्मनो न आनन्दः स्यात्स्वभावः तदपत्यकलत्रादयः शमदमादयो भावाः कस्य प्रीणानाः स्युः, नह्यपत्यादयः सहस्रमपि चैतन्यशून्यं किंचि-

---

'त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम्॥'

इति।

'आनन्दो ब्रह्मणो रूपम्'

इति च। तथा च

'चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम्'

इत्यादिना बहुशोऽनुशिष्टमस्ति।

दाम्रष्टुं प्रगल्भन्ते, चैतन्यस्य च स्वविश्रान्तिरेव 'आनन्द' इत्युक्तम्, यदा पुनरस्य स्वविश्रान्तिपरामर्शे प्रत्यौदासीन्यं तदानीं देहच्छेदादिदुःखानुभूतिव्यपदेशः, वास्तव्या तु दृष्ट्या तादृशपरामर्शशून्यत्वेऽपि न कदाचिदस्य स्वविश्रान्त्यभावः इति सर्वदा सुखानुभूतिव्यतिरेकेण न किंचिद्दुःखम्—इत्यालोच्यते। ननु आनन्दात्मकत्वे कथं क्रोधादौ पुंसां शस्त्रप्रहारादिश्लेषानुभूत्यौन्मुख्यम्? इति चेत्, न—क्षेत्रकलत्राद्यनुरागावेशवैवश्यादेवमुद्योग इति कश्चिदानन्दाध्यवसाय एव तेषामेतादृग्व्यवहारोपक्रमे निबन्धनम् इति दुःखानामपि सौख्यकक्ष्यानुप्रवेशात्सिद्धमस्यानन्दस्वभावत्वम्। यदुक्तं श्रीमत्स्तोत्रावल्याम्।

'दुःखान्यपि सुखायन्ते विषमप्यमृतायते।
मोक्षायते च संसारो यत्र मार्गः स शांकरः॥'

इति। इत्थं च आत्मनः स्वस्य कामः इच्छौत्सुक्यस्पृहादिपर्यायो भाव[३८]त्वेन वर्तते तमेवोन्मील-

---

३८ इच्छेत्यादि, यदुक्तम्

यितुमपत्याङ्गनादिप्रभृतिरखिलो वेद्यप्रपञ्चः प्रीणानो भवति – इति श्रुत्यर्थो व्याख्यातः, प्रियार्थ इति प्रीत्यर्थस्य प्रियशब्देनोपन्यासादात्मनः स्वभावभूतः यः प्रीतिरूप एव भावः स कर्तृकरणादिवैचित्र्येण बहुप्रकारोऽनुभूयते, न पुनरेतद्व्यतिरिक्तः कश्चित्प्रीणनादिः पदार्थः – इत्यासूत्र्यते। मुक्त अमुक्तो वेति – न खलु नैयायिकादिमर्यादया मुक्त्यवस्थायां पाषाणप्रायत्वादात्मनो निरानन्दत्वम् यतो मुक्त्यभावेऽपि तस्य एवंस्वभाव-

---

'वास्तवेऽपि चिदेकत्वे न स्यादाभासभिन्नयोः।
चिकीर्षालक्षणैकत्वपरामर्शं विना क्रिया॥
इत्थं तथा घटपटाद्याभासजगदात्मनः।
तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया॥'

इति।

'पुष्पाणि स्वभावपरिपोषका भावाः॥'

इति च पूर्वमुक्तम्। तथा च

'यल्लोहितं तदग्निर्यद्वीर्यं सूर्येन्दुलक्षणम्।
अ इति ब्रह्म परमं तत्संघट्टोदयात्मकम्॥
तस्यापि च परं वीर्यं पञ्चभूतकलात्मकम्।
भोग्यत्वेनान्नरूपं च शब्दस्पर्शरसात्मकम्॥'

इत्यादिना निर्णीतम्।

त्वमपरिहार्यम्, किमुत तदनुभवः—इति द्योतनार्थ-मेवमनादरेणोपन्यासः। किं च स्वस्यानन्दरूपा-वश्यंभावे बन्धमोक्षादिविकल्पविक्षोभोऽत्र न कश्चिदुपपद्यते—आनन्दस्य चित्तसत्त्वसामरस्या-नुभूत्यात्मकत्वात्। यदाहुः

'यत्र चित्तसत्त्वयोर्व्याप्तिस्तत्रानन्दो विराजते।
यत्रानन्दो भवेद्भावे तत्र चित्तसत्त्वयोः स्थितिः॥'

इति। एनमेव ह्यानन्दमुद्दीपयितुमाम्नायेषु प्रथ-मद्वितीयादिद्रव्यस्वीकारनिर्बन्धोऽनुबध्यत इत्यु-पनिषत्॥ ५४॥

अथैवमुपपादितमात्मस्फुरत्तापरामर्शं प्रत्युपा-यानाणवादीनुपदिदिक्षुः प्रथमं त्रीनपि एकयैव गाथयोद्घाटयति

---

अइ णिअहिअउंल्लासं
णिण्णेतुं णिचाणिकूलंइच्छा।
मलतुइपुटीअंवा
अथंगत्ताण सोमसुंजाणताइ॥५५॥

---

यदि निजहृदयोल्लासं
निर्णेतुं नित्यनिष्कलमिच्छा ।
मध्यतुटि[38]स्त्रुटितव्या
अस्तङ्गतयोः सोमसूर्ययोस्तर्हि
॥ ५९ ॥

यदि निजं यत्स्वसाक्षात्कारोल्लेखयोग्यं हृदयं व्याख्यातस्वभावं तस्योल्लासश्च – इत्यचेतयितृत्वादिवैचित्र्येण स्फुरणं, स प्रकृत्या कालविभागव्युदासेन निष्कलो – हेयोपादेयत्वाद्यशेषविकल्पकल्पनाकलङ्कशून्यो भवति, तमेवंविधमत्यन्त-

३८ मध्यतुटिरिति । तदुक्तम्

'ज्ञातारं मां ज्ञानं शक्तिरिव त्रितयवज्ज्ञेयम् ।
अविभक्तं भावयतः सोऽहं सा तत्रयं तच्च ॥
वेद्यं स्वक्रमसिद्धां वित्तिमनुप्रविशदङ्गविषयाद्यम् ।
वेदितरि वित्तिमुखतो लीनं तल्लक्षणं भवति ॥'

इति । अत्र च टीकाकाराशयानुसारेण सोऽहम् इति – अहं सः, सोऽहम्, हंस इत्येतत्पदत्रयच्छेदम् अविच्छिन्नविच्छिन्नाविच्छिन्नविच्छिन्नविमर्शात्मकं बोध्यम् ।

स्पष्टतया प्रत्यक्षीकारचमत्कारनिश्चयास्पदं कर्तुं यदीच्छा युष्माकमुपासकानाम्

'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।'

इति श्रीमद्भगवद्गीतास्थित्या काचिद्वाञ्छा विजृम्भते चेत्तर्हि अयमुपाय इति वक्ष्यमाणसर्वार्थसाधारणोऽयमन्वयप्रकारः, तत्र यावेतौ सोमसूर्ययोर्वेद्यवर्गानुप्राणनत्वात् वेदितृत्वस्वभावत्वाच्च सकारहकारात्मानौ वर्णविशेषौ तयोरस्तं – विसर्जनीयसुहृदयसंपुटीकारलक्षणमनुस्वारं च गतयोरश्नुवानयोर्या मध्यमा तुटिः – विभज्यावस्थानलक्षणः कालखण्डः स त्रुटितव्यः – माणिक्यमालिन्यादिवदुद्धर्तव्यः, तदानीं 'ह-अं-स' इति विमर्श उत्पद्यते । अयं भावः – यद्यपि मातृकापीठादौ ह इति स इति चान्यवर्णसाधारण्येन अनयोर्ग्रहणमस्ति तथापि तद्द्वयहृदयवर्तिना 'हं-स' इति स्वात्मप्रत्यभिज्ञानोपायत्वेन 'हं-स'

पं० २ ख० पु० उपसन्नानामिति पाठः ।

श्लेषवशान्महामन्त्रात्मना विमृष्टव्यम् – इति वैपरीत्येनोद्धारो मन्त्रस्य लोकान्प्रति गोप्यत्वात्, गोपनीयत्वद्योतनार्थम् 'सोऽहम्' इति मन्त्रान्तरप्रत्यायनार्थं च। अयं च मन्त्रात्मकवर्णविशेषपरामर्शरूपत्वादाणवः कश्चिदुपायः। यदुक्तं श्रीमालिनीविजये

'उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः।
यो भवेत्स समावेशः सम्यगाणव उच्यते ॥'

आणव उपाय

इति। एवमुच्चारादावपि ऊह्यम्। किं च सोम ईषणीयज्ञेयकार्यस्वभावः प्रमेयोल्लासः, सूर्यः इच्छाज्ञानक्रियात्मकः प्रमाणस्फुरणम्, अनयोरस्तं – स्वसामर्थ्यक्रियां गतयोः प्राप्तवतोः सतोः, 'इति भावलक्षणे सप्तमी' तथाभवतोश्चानयोर्मध्यस्यात्मनः प्रमातृभूतस्य त्रुटिः – संदेहलक्षणो दोष उत्त्रुटितव्यः – स्वात्मानं प्रत्युन्मिषन् संशयः संच्छेद्य इत्यर्थः। एतदुक्तं भवति – एषणीयताद्यनुप्राणनः स्थूलोऽयं प्रपञ्चोल्लासः इच्छादित्रितयप्रवृत्तिं विना न क्वचिदपि संपद्यते, इत्येषि-

वृत्त्वादिरूपस्यात्मनः स्पष्टापरोक्षीकारविपर्ययात्मानं संशयातङ्कं तिरस्करोति, तत उक्तरूपस्वहृदयपरामर्शलाभ, इति शाक्तश्चायमुपायः — उच्चारादिव्यतिरेकेण स्वसंविद्विकल्पमात्राकारत्वात्। यदुक्तम्

'उच्चाररहितं वस्तु चेतसैव विचिन्तयन्।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥'

इति। अथ सोमोऽपानः, प्राणः सूर्य — इति प्रसिद्धम्, तयोर्द्वादशान्ताद्धृदयान्तं हृदयाद्द्वादशान्तं चास्तम् — इति 'भावे निष्ठा' असनं क्षेपनं स्फुरणं गतयोर्या मध्यावस्थातुटिः — बाह्याभ्यन्तरभावोपलक्ष्यमाणतादृक्परामर्शक्रियात्मचमत्कारलक्षणा, सा त्रुटितव्या — हृदयंगमीभावपर्यन्तमात्मनो निर्णेतव्यमिति यावत्। अयमाशयः — अशेषशरीरसाधारण्येन नित्योदितस्वभावयोः स्वात्मपरिस्पन्दपरमार्थयोः प्राणापानयोर्युगपदुभयविसर्गारणीरूपतापरामर्शः स्वतः सिद्धोऽपि स्वहृदयाह्लादचमत्कारस्थैर्योत्पादनार्थमात्मन्यनुसंधेयः य-

स्यानुसंधानेऽप्येवंरूपतया न काचित् क्षतिरिति । अयं पुनरुपायः सर्वविकल्पविक्षोभव्युदासेन स्वस्वभावमात्रोपपादनप्रवृत्ततया शाम्भव इत्यवगन्तव्यः । यच्चोक्तम्

'अकिंचिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः ।
उत्पद्यते य आवेशः शाम्भवोऽसावुदाहृतः ॥'

इत्यादिना ॥ ५५ ॥

एवं यौगपद्यादुपायत्रयं प्रतिपाद्य विनेयजनहृदयादिरोपणहेतोः पृथक् प्रपञ्चयिष्यन्नादावाणवमालोचयति

थोरअरेसुवि पेखंह
भूदेस षस णिकलावथं ।
छत्तीआदलङ्गी
किविस होई सोमनाहोसा ॥५६

स्थूलेष्वपि प्रेक्षध्वं
भूतेषु खस्य निष्कलावस्थाम् ।
षट्त्रिंशकातिलङ्घी
कीदृशो भवति सोमनाथः[३९] ॥५६

व्याख्यातरूपाणां तत्त्वानां मध्ये परमशिवभट्टारकः सर्वोपायप्रतिपाद्य इति परत्वेनावतिष्ठते, तेषु च स्थूलेष्वपि पृथिव्यादेः सकाशात् खस्य आकाशरूपस्य निष्कलां परिच्छिन्नत्वलक्षणकलाविलासशून्यां स्वभावभूतामवस्थामालोचयध्वम् यया खेचर्याद्यधिकरणप्रासिद्धिः, अत्यन्तस्थूल-

३९ सोम आनन्दरूपा समना, तस्या नाथस्तदारूढः शिवः कीदृश? इति । यदुक्तं

' चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्ध्वतः ।
समना नाम सा शक्तिः सर्वकारणकारणम् ॥
सर्वाण्डानि बिभर्तीयं शिवेन समधिष्ठिता ।
अत्रारूढः स भगवान् शिवः परमकारणम् ॥
शिवः सर्वस्य कर्तेयं शक्तिः कारणमिष्यते ॥ '

इति ।

कर्ता कारण

स्याप्यस्य निष्कलत्वेऽभ्युपगम्यमाने षट्त्रिंशत्तत्त्वान्यतिक्रामन्परमेश्वरो निष्कलः कीदृक् इत्यवधार्यताम् । तदिदं दण्डापूपन्यायोऽप्युत्पन्न इति ॥ ५६ ॥

अथ शाक्तमभिव्यनक्ति

जे कुलंकुंरसुहासव-
पानमहमहूसवे पअट्टंति ।
ते षु विअंपंकुरे
रसिआ उपदंसियुं पगभन्ति५७॥

---

ये कुलकुम्भसुधासव-
पानमहामखोत्सवे प्रवर्तन्ते ।
ते खलु विकल्पाङ्कुर-
रसिका उपदेष्टुं प्रगल्भन्ते ॥५७॥

---

पं० ११ ख० पु० पानमहोत्सवसुखे इति पाठः ।
पं० १३ ख० पु० रसिकानुपदेष्टुम् इति पाठः ।

ये दैशिककटाक्षपूतचेतसो महापुरुषाः, कुलस्य षडध्वरूपस्यात्मनो वेद्योल्लासस्य, यः कुम्भः – स्वानन्दस्वभावतया प्रतिष्ठाहेतुराधारविशेषः, तत्रत्यो यो लौकिकालौकिकमाधुर्यसामरस्यास्पदत्वादमृतशब्दवाच्य आसवो – भैरवीयं द्रव्यम्, तस्य यत्पानं – स्वात्मैश्वर्यप्रसाधनपरामर्शपूर्वको निर्वेशस्वीकारः, स एव महान्मखरूपोऽध्वरात्मा चोत्सवः – स्वाह्लादसाक्षात्कारसम्पत्सौभाग्यं, तस्मिन्विषये प्रवर्तन्ते – वेद्यवेदकभावादिविकल्पविगलनप्रकर्षपूर्वकं व्याप्रियन्ते, तत एव हेतोः पाशव-शैवादिचित्रकल्पनामयान्संस्कारमात्रशेषतानुप्राणनात् भेदप्रथाविलासानुपदेष्ट्म् – अत्यन्तसामीप्यरूपस्वात्मतादात्म्यापादनयुक्त्या पुनरुत्पत्तिशून्यौचित्येन चर्वयितुं प्रगल्भन्ते – प्रकृष्टं स्थैर्यमनुभवन्ति । अयमेव हि मुख्यया वृत्त्या रस उच्यते, यदुपचारेण माधुर्यप्रतीतयः शृङ्गारादयोऽप्येवं व्यपदिश्यन्ते, यत्तात्पर्येण

'स एव वा आद्यपुरुषोऽन्नरसमयः'

इत्युपनिषदि समाम्नातमस्ति ॥ ५७ ॥

अथ शांभवमुपदिशति

हन्त मुहं पडिबिम्बतइ
पडिबिम्बतं तह तंपि अदाओ ।
अदाओ उण जसिं
पडिबिम्बतइ सोति णाअवो॥५८

---

हन्त मुखं प्रतिबिम्बति
प्रतिबिम्बतु तथा तदपि दर्पणः ।
दर्पणः पुनर्यस्मिन्
प्रतिबिम्बति सोऽपि ज्ञातव्यः[४०]
॥ ५८ ॥

---

४० हन्त मुखमिति, हन्तेति खेदे मुखस्य मालिन्यप्रदर्शनार्थं, यस्मात् तन्मुखं नयनजलभूताकाशादौ स्वयं मलिनत्वात् तेपु स्वच्छेषु प्रति-बिम्बति, तथा मालिन्यादेव तदपि सर्वं मुखनयनजलभूताकाशादि दर्पणः प्रतिबिम्बयतु – स्वाभिमुख्येनोल्लसन् स्वच्छतयैव न तु चेतनतया

लोके हि दर्पणादौ स्वच्छे वस्तुनि स्वाभिमुख्येनोल्लसन् आननादिः पदार्थः प्रतिफलनयुक्त्या परिस्फुरति—इति प्रसिद्धोऽयं अर्थः, तत्र दर्पणवदाननादीनां वास्तवं वपुरत्रैवानन्तरमुपपादयिष्यते। स्थूलया दृष्ट्या मुखतयाभिमतो भावः प्रतिबिम्बनक्रियामनुभवति, आदर्शात्मकश्च तदाधारतया तत्प्रयोजको भवति—इत्यस्तु नामैतत्, यः पुनरयमादर्शः स्वच्छतावशादाननादिप्रतिबिम्बनस्थलतयानुभूयते स एव यत्रात्यन्तस्वच्छे स्वात्मनि तादृग्रूपतया प्रतिबिम्बति सोऽपि ज्ञातव्यः—यन्मयोऽयमशेषः प्रतिबिम्बनप्रगल्भोन्मेषः ज्ञातव्यः—ज्ञानार्हः, शक्यज्ञानो वा, अवश्यं ज्ञातव्य इति वा ॥ ५८ ॥

---

मुखादिपदार्थसार्थप्रतिबिम्बं धारयतु, पुनः पक्षान्तरे स तादृक् स्वच्छो दर्पणो यस्मिन् प्रतिबिम्बति परमाकाशे स एव ज्ञातव्यः, अथ वा अधरभूमिकाग्रहेण चिदाकाशे सोऽपि ज्ञातव्य एव, यतः

> ' न शिवः शक्तिरहितो, न शक्तिः शिववर्जिता ।
> यामलं प्रसरं सर्वं ....................... ॥ '

इति न्यायात् ।

अथेत्थमुपदिष्टोपायप्राबल्यप्रतिलब्धात्मस्वरूपपरामर्शमांसलोल्लासयोगिनामतिशयमाख्यास्यन् आदावेषामन्तर्बहिः स्वभावदेशकालावच्छेदव्युदासेन नैश्चिन्त्यं निश्चेतुमाह

अविआरोहअपासे
चासपेडन सअ अन्थे ।
अन्तोतंतो जोई
बाहिर-तंतो त्ति कंपणा कुन्तो ॥
॥ ६९ ॥

---

अविकारोभयपार्श्वे
चाषपिच्छसदृशेऽर्थे ।
अन्तर्मुखो योगी
बहिर्मुख इति कल्पना कुतः ॥
॥ ६९ ॥

अर्थ्यते सर्वैः प्राप्यते इति अर्थः स्वात्मरूपं किंचिदलौकिकं, तत्स्वच्छमयूरपिच्छविलक्षणचाषपक्षवद्द्वयोरपि भागयोः – अहन्तेदन्तयोरविकारे, तस्मिन्नर्थे प्रमातृस्वात्मनिष्ठतारूपमन्तर्मुखत्वं वेद्यव्यपेक्षलक्षणा बहिःप्रवृत्तिश्च – इति या कल्पना – कृत्रिमा प्रक्रिया, सा कुतो हेतोरस्तु न कुतश्चिदपि संगच्छते ॥ ५९ ॥

अथ देशाध्वना कालाध्वना वाप्यस्य न कश्चित्संकोचकलङ्कोपलेप इत्युन्मीलयितुमाह

जोई आअरशिविणि
असुमोसंसतरीपंव परिपाडी ।
चिंता विअ मणिमालं
विमरिसस्वंतंकगुतहई ॥ ६० ॥

---

योगी जागरस्वप्न-
सुषुप्त्यवस्थात्रयस्य परिपाटीम् ।

---

पं० १४ ख० पु० जागरस्वप्नं, सुपुप्ततुर्यपरिपाटीमिति पाठः ।

**चित्रामिव मणिमालां**
**विमर्शसूत्रैकगुम्फितामुद्वहति**
**॥ ६० ॥**

यान्येतानि जागरप्रभृतीनि पर्वाणि – अवस्था विशेषाः, एषां पर्वाणां या परिपाटिस्तां, योगी मौक्तिकमाणिक्याद्यनेकरत्नशालिनीं हारयष्टिमिव विमर्शाख्येन सर्वानुवेशप्रगल्भेन एकेन तन्तुना संकलितां कुर्वन् उद्वहति – लौकिकप्रस्थानोल्लङ्घिना केनचिदुत्कर्षेण स्वात्मन्यवस्थापयति । तत्र च लौकिकालौकिकसाधारणमवस्थात्रयमतिक्रम्य परमप्रमातृरूपतुर्यातीतस्वभावतया अवधार्यमाणं तुर्यमेवात्र विमर्शः ॥६०॥

ननु व्यावर्णितमेतद्देशकालादिसकलवैधुर्योद्धुरं शुद्धसंवित्कलाकैवल्यभावं योगिनः स्वाच्छन्द्यं, तच्च न संभवति – यस्य कस्यचिद्विकल्पोपश्लेषस्य नित्यमवर्जनीयत्वात्? इत्याशंक्याह ॥

उल्लोआनन्दसुहा-
सीहरसूवेईएणा हिअएण ।
अहिलंसइ लोअजंता
तिन्तिणीचौमणरसंतरं जोई
॥ ६१ ॥

---

उल्लोकानन्दसुधा-
शीधुरसोद्देजितेन हृदयेन ।
अभिलषति लोकयात्रां
तिन्तिणीचर्वणरसान्तरं योगी
॥ ६१ ॥

योऽयम् उल्लोकः 'स एको ब्रह्मण आनन्द' इत्युपनिषत्प्रक्रियया मनुष्यगन्धर्वाद्यवच्छिन्नप्रमातृहृदयानन्दातिशायी पूर्णाहंभावभावनाचमत्कारसारस्वान्तर्विश्रान्तिसंपत्सौन्दर्यमात्रस्वपरिस्पन्दः कश्चिदाह्लादोत्कर्षः, स खल्वमृतासवस्व-

भावरसद्वयव्यतिकरकल्पनीयार्थक्रियाकरितया प्रकाशविमर्शस्वरूपमाधुर्यातिशयानुभवनप्रावीण्यात् योगिनो हृदयमुद्वेजयति — उत्कृष्य अन्यत्र स्वप्रतियोगिनि पदार्थे प्रवर्तयति, तादृशश्चायं हृदयेन उपकरणभूतेन लोकस्य देहाक्षभुवनादेर्या यात्रा — प्रवाहनीत्या प्रवृत्तिः, सा चिञ्चास्वादनवत्प्रागनुभूतमाधुर्योत्कर्षापेक्षया रसान्तरम् — अम्लादिसादृश्यादन्यो रसः संपद्यते, यत्र उद्वेजितहृदयस्य योगिनः इच्छाशक्तिरुज्जृम्भते, योगीच्छायाश्च फलप्राप्तिपर्यन्तत्वमविप्रतिपन्नम्। यदुक्तं शिवसूत्रेषु

'चित्तस्थितिवच्छरीरकरणबाह्येषु ( ३–१९ )'

इति । क्षीरशर्कराद्यत्यन्तमधुरोपयोगोद्वेजितचेतसां च पुंसां तिन्तिण्याद्यम्लद्रव्यपदार्थान्तराभिलाषो लोकप्रसिद्धः । अयं भावः — शरीरेन्द्रियादिवेद्यविक्षोभव्युदासेन स्वात्ममात्रसाक्षात्कारलक्षणं सौख्यमवलम्ब्य उल्लासे बहिर्विभीषिका-

विकृतात्मनः परिमितस्य योगिनश्चाकिंत्यप्रकारः, अपरिमितस्य तु पूर्णाहन्तात्मकानवच्छिनानन्दपरिस्पन्दास्वादसंप्रतीतात्मनः स्वात्मपक्षनिक्षिप्ताशेषबाह्यप्रपञ्चत्वादिदन्तानुभूत्यवश्यंभावः, ततश्च विकल्पविक्षोभानुभूतिवैचित्र्योत्तरमिदन्तावरोहणमप्यनवच्छिन्नाहंभावभास्वरे महति प्रमातृपर्वण्येव पर्यवस्यति ॥ ६१ ॥

ननु इदन्ताया मायीयावश्यंभावत्वादुद्भावितोऽयम् अहन्तेदन्तयोरविशेषः कथं संगच्छताम् ? इत्याशङ्क्याह

---

जंही गृह्णइ जोई
  कलनपणालीहि विसअसौख्याई ।
णिअहिअयोवमणजरीहि
  ताहि फुरणमयं कणइ तेलोक्क ॥ ६२

---

याभिर्गृह्णाति योगी
करणप्रणालीभिर्विषयसौख्यानि ।
निजहृदयोद्वमनशीलाभि-
स्ताभिः स्फुरणमयं करोति त्रैलो-
क्यम् ॥ ६२ ॥

---

प्रकृत्या परमप्रमातृपदाधिरूढोऽपि स्वेच्छामात्रोपाधिना परिमितप्रमातृताभावमवतरन् अत एव प्रकाशानन्दसामरस्यामृतमहाह्रदायमानो योगी याभिरन्तर्बहिरिन्द्रियशक्तिलक्षणाभिः शब्दस्पर्शादिविषयवपूंषि सौख्यानि गृह्णाति – आत्मसात्करोति, ताभिरेव व्याख्यातरूपमात्महृदयमनवरतमुद्वहन्तीभिः प्रमातृप्रमाणप्रमेयपरमार्थमेतत्त्रैलोक्यं स्वहृदयलक्षणस्फुरणात्मकं विधत्ते ॥ ६२ ॥

नन्विदं योगिनां नैश्चिन्त्यमाणवाद्युपायसव्य-

पेक्षया विकल्पकक्ष्योलङ्घनाक्षमत्वात् कथमनैश्चिन्त्यपक्षमनुप्रविशति ? इत्याशंक्याह

---

जह तुहं टीइ तहं संसु
निचित्तो तिह्नु पहिंढिऊँ अथो ।
तंवदि अंथि वियेआ
एंवं उवदिसइ कंस कोअंणो॥६३॥

---

यथा तव स्थितिस्तथास्स्व
निश्चिन्त इति प्रतिष्ठितोऽर्थः ।
तत्राप्यस्ति विवेक
एवमुपदिशति कस्य कोऽन्यः ॥६३

---

यद्यपि आणवाद्युपायानां भेदानुप्राणनतया विकल्पकक्ष्यानुप्रवेशः तथापि आणवं विकल्पोल्लुण्यं शाक्ते, तस्य स्फुरत्तामात्रं शाम्भवं निर्विकल्पत्वमित्युत्तरोत्तरपर्वानुशीलनादुक्तरूपमेषां नै-

श्चिन्त्यमव्याहतम्, तवोपदेश्यस्य येन प्रकारेण स्थितिर्वृत्तिर्भवति तेनैव प्रकारेण विकल्पलक्षणां चिन्तामतिक्रामन् अव्याकुलं वर्तस्व — इति योऽयमुपायलक्षणोऽर्थः स खलु आणवादिक्रमोल्लङ्घनेन प्रतिष्ठितः शाम्भवत्वात्मना पार्यन्तिक इत्याख्यायते, तत्रापि कश्चिद्विवेकोऽस्ति — पर्यालोचनया कयाचिद्भाव्यम्, यदुत एवं सति उपपादितया भङ्ग्या योऽयमुपदेशो — रहस्यार्थप्रख्यापनं, स खलु आस्वादे विध्यर्थस्य स्वान्यविभागरूपभेदजीवितत्वात् किं कर्मकः किं कर्तृको वा स्यादित्युद्भावयितुं नार्हति — तं प्रति कर्मकर्तृभूतयोः उपदेश्योपदेशकयोर्वस्तुवृत्त्या भावात् ॥ ६३ ॥

इत्थमत्याश्चर्यनिश्चिन्त्यशालिनां योगिनां स्वभावमनुसंदधानस्तत्रकृत स्वात्मनोऽपि तेभ्यो वैलक्षण्याभावात् तादृक्स्वभावतापरामर्शमांसलाह्लादातिशयमनुभवन् एतदाशयावेशवैवश्योद्रिक्तस्वसंविदाटोपगौरवोच्चलचित्तवृत्तिचमत्कारोत्तरमाह

ऊँ संसारसुहेली
ऊँ सुलब मोखमंग सोहंगम् ।
तुडिअअतसकलंक
ऊँ सिविजोईण जामली सिद्धि:
॥ ६४ ॥

---

अहो संसारसुखकेली
अहो सुलभं मोक्षमार्गे सौभाग्यम् ।
त्रुटितान्तककलङ्का
अहो शिवयोगिनां यामली सिद्धि[41]:
॥ ६४ ॥

आश्चर्यं खलु—अयं संसारलक्षणः सुखातिशयो यो जननमरणादिरूपतया बाह्यजनं प्रति क्लेशात्मकः, अत एव हेयतया निश्चीयमानोऽपि

---

४१ सिद्धिरिति, अयमर्थः—इदन्तालक्षणः सारः, पूर्णाहन्तालक्षणं मोक्षसौभाग्यम्, अहन्तेदन्तोभयमिश्रता शिवयोगिनां यामली सिद्धिः—प्रकाशविमर्शरूपेति ।

मोक्षप्रायतया अस्माभिरास्वाद्यते । यदुक्तं श्री स्तोत्रावल्याम्

'दुःखान्यपि सुखायन्ते विषमप्यमृतायते ।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः ॥'

इति । आश्चर्यं चेदं मोक्षलक्षणस्य सर्वजनमृग्यमाणस्य परमेश्वरानुग्रहैकलभ्यस्य अर्थस्य सौभाग्यं सर्वहृदयहारित्वम् । त्रुटितान्तकेति शिवयोगिनो नाम

'न ध्यायतो न जपतः ........ ।'

इत्यादिश्रीस्तोत्रावलीस्थित्या प्राणधारणाद्युपरोधव्यतिरेकेण प्रकाशात्मना शिवेन सह, विमर्शात्मना शक्त्या च सम्बन्धमश्नुवाना महात्मानः, तेषां या सिद्धिः — स्वस्वभावचमत्काराकारा स्फुरत्ता, यामली — न कदाचिद्वेद्यवेदकत्वद्वितयसृष्टिस्वरूपतामतिक्रामति ॥ ६४ ॥

श्रूयमाणतामात्रसौलभ्यमेतदर्थोन्मीलनं, न

पुनः स्वहृदयानुभूतिपर्यवसायि – इत्याख्यापयितुमाह

---

क्षणमेकं सुष्टणावि
अमअसहावेण णोणभावेण ।
संवोतिणो संवो
संव इरं लहइ संवसोहंग ॥६९॥

---

क्षणमात्रस्पृष्टेनापि
अमृतस्वभावेन ज्ञानभावेन ।
सर्वोत्तीर्णः सर्वः
सर्वं चिरं लभते सर्वसौभाग्यम्
॥ ६९ ॥

---

[ क्षणमात्र इति ६९ तमपद्यादारभ्य पद्यत्रयस्य व्याख्या सर्वेषु लब्धपुस्तकेषु न वर्तते, त्रुटिता समस्ति ]

गूढादगूढरय दो होई
फुडअतो फुडरइ एसो ।
देशक-कडंखपादे
पखो पडमो ण होइ धंणाणाम् ॥
॥ ६६ ॥

गूढाद्गूढतरो यो भवति
स्फुटादपि स्फुटतर एषः ।
दैशिककटाक्षपाते
पक्षः प्रथमो न भवति धन्यानाम्
॥ ६६ ॥

अंचतु ड्यंण विज्या
चतुंसोन्ताणंवि साअराणं च ।
एण्णंचि अमआमअं
मथाति मन्थानहेरवो देवो॥ ६७ ॥

आस्तामन्या विद्या-
श्चतुःस्रोतसामपि सागराणामिव ।
एवमेवामृतमयं
मथ्नाति मन्थानभैरवो देवः॥६७॥

---

मथ्नाति — तत्तत्स्रोतःप्रतिपाद्यार्थान्तरानादरोत्तरं स्वात्मशक्त्या पृथक्पिण्डीकृत्य उत्थापयति ॥ ६७ ॥

---

हन्त रहसं भणमो
मूढा मा भमद गंभगोलेसु ।
अंबासंणं हिअअं
पआयलोएह तंस व उजोअं
॥ ६८ ॥

---

हन्त रहस्यं भणामो
मूढा मा भ्रमत गर्भगोलेषु ।

अत्यासन्नं हृदयं
पर्यालोचयत तस्य चोद्योगम्
॥ ६८ ॥

यदिदं षडध्वोल्लाससमष्टिरूपस्य स्वशरीरस्य अनुप्राणनतया अवतिष्ठमानसविकल्पकावस्थया तदुत्तीर्णं च सत् प्रकाशविमर्शद्वितयमेलनलक्षण-मन्तस्तत्त्वं हृदयमित्युच्यते, तस्योद्योगो – यतः कुतश्चिदप्याकारादौदासीन्यापहस्तनस्वभावमुद्य-न्तृत्वं, तत् परितः इच्छाज्ञानक्रियापरिस्पन्दप्रव-र्तिताशेषविश्वव्यवहारप्रथापरामर्शपूर्वकमालोच-यत – आत्मानुकूल्यादालोकयध्वम् । स चोद्योगः कदाचिदिन्द्रियपरिस्पन्दानुबन्धिक्रियाशक्तिस्फा-ररूपरसादिविषयग्रहणे कौतूहलात् बहिःशय्याम-धिशय्य व्यापेक्षविभ्रममनुभवति, कदाचिच्च ज्ञान-शक्त्यवष्टब्धो विषयेभ्यः प्रत्यावृत्त्य स्वात्ममात्र-विश्रान्तिस्वभावां प्रत्यगानन्दसंपदमनुभुङ्क्ते, तदु-भयं दण्डमुण्डक्रमात्मतया शास्त्रेष्वनुशिष्यते॥६८

एणं चिअ महत्थं
युधारभंमि पाण्डुपुत्तंस ।
छोलहसहंससत्ती
देवः उबदिसइ माहऊ ॥ ६९ ॥

एनमेव महार्थं
युद्धारम्भे पाण्डुपुत्रस्य ।
षोडशसहस्रशक्ति-
दैंव उपदिशति स्म माधवः॥६९

इत्थं पाअइसुंत्त सत्तइसमुल्लासेकइंधायिनीं
जागत्तंखणणिंविसेसशिविणोत्तीणं पावीणोत्तरम् ।
लोउलङ्घनजोगसिद्धिपअवीपंथाणबंधोजयं
कन्थाशूलकपालमत्तविहवं वेदीमि तं जोइणम् ॥ ७० ॥

इत्थं प्राकृतसूत्रसप्ततिसमुल्लासैकसंधायिनीं
जाग्रत्तत्क्षणनिर्विशेषस्वपनोत्तीर्णां प्रतिज्ञोत्तराम् ।
लोकोल्लङ्घनयोग्यसिद्धपदवीप्रस्थानबन्धोद्यमां
कन्थाशूलकपालमात्रविभवां वन्देत तां योगिनीम्॥७०॥